प्रथम स्वर और अन्तस्थवर्ण स्त्रीलिंग हैं, शेष अक्षर नपुंसक हैं ऐसा लिंगज्ञाता कहते हैं ॥ ६ ॥

नाम्नामिंद्रोदेवतावरुणः उपसर्गाणामादित्यःसर्वस्याक्षरगणस्य॥ स्वरा विसर्जनीयो यमाश्च पुँल्लिंगाः । ङञणनमा यरलवाः स्त्रीलिंगाः । शेषाण्यक्षराणिनपुंसलिंगानीति ॥ संधिश्चतुर्विधो भवतीति॥लोपागमौवर्णविकारःप्रकृतिभावश्चेति।तद्यथा-तत्रलोपोभवति अयक्ष्माः×मा अयक्ष्मामा १।१।शततेंजाः+वायुः शततेंजाव्वायुः १।२४ । तिग्मतेंजाः+द्विषतः । तिग्मतेंजाद्विपतः १ ।२४ इतिलोपः ॥ आगमोभवति यथा प्रत्यङ्सोमः प्रत्यङ्क्सोमः १० । ३१ प्राङ्सोमः प्राङ्क्सोमः १९ । ३ अस्मान् सीते अस्मान्त्सीते १२ । ७० त्रीन् समुद्रान् त्रीन्त्संमुद्रान् १३ । ३१ इतिआगमः ॥ विकारोभवति आ+इदम् एदम् ४ । १ आ+इमे एमे आ+इष्ट्यः एष्ट्यः प्र+इषितः प्रेषितःइतिविकारः॥प्रकृतिभावो यथा आशुः शिशानः । युञ्जानःप्रथमम् ११।१ अदितिःषोडशाक्षरेण९।३४।देवोवंःसविता१।१।इतिप्रकृतिभावः ॥ आकाशस्थायथाविद्युत्स्फुटितमणिसूत्रवत् ॥ एषच्छेदोविवृत्तीनांयथाबालेषुकर्तरी ॥ ७ ॥

नामिकका इन्द्र, उपसर्गोंका वरुण, और सब अक्षरोंका सूर्य है, स्वर विसर्ग और यम पुँल्लिंग हैं, ङ, ञ, ण, न, म, य, र, ल, व, यह स्त्रीलिंग हैं, शेष अक्षर नपुंसकलिंग हैं, संधि चार प्रकारकी होती है लोप, आगम, वर्णविकार और प्रकृतिभाव, इनमें लोप जैसे अयक्ष्मा+मा=अयक्ष्मामा इसमें विसर्गोंका लोप हुआ है इत्यादि । आगम जैसे प्रत्यङ्+सोमः=प्रत्यङ्क्सोमः यहां ककारका आगम हुआ इत्यादि विकार जैसे आ×इदम्=एदम् इत्यादि यहां आ × इ के स्थानमें ए

१ आदित्योमुनिभिः प्रोक्तः सर्वाक्षरगणस्यच । स्वराविसर्जनीयाश्चयमाः पुँल्लिङ्गकाःस्मृताःइतिवापाठः ।

विकार हुआ, प्रकृतिभाव जैसे आशुःशिशानः इत्यादिमें ज्योंका त्यों रहगया आकाशमें जैसे बिजली मणिसूत्रवत् स्फुरायमाण होती है, इसी प्रकारसे निवृत्तिका छेद होना चाहिये जैसे बालकोंके बालोंमें कैंची ॥ ७ ॥

द्वयोस्तुस्वरयोर्मध्येसंधिर्यत्रनदृश्यते ॥
विवृत्तिस्तत्रविज्ञेयायऽईशेतिनिदर्शनम् २२।२ ॥ ८ ॥

दो स्वरोंके मध्यमें जहां संधि न दीखे वहां विवृत्ति जाननी, जैसे य ईशः ॥ ८ ॥

पिपीलिकापाकवतीतथावत्सानुसारिणी ॥
वत्सानुसंसृताचैवचतस्रस्तुविवृत्तयः ॥ ९ ॥

विवृत्ति चार प्रकारकी होती है पिपीलिका, पाकवती, वत्सानुसारिणी, वत्सानुसंसृता ॥ ९ ॥

पंचरंगाःप्रवर्तंतेघातनिर्घातवज्रिणः ॥
अहरप्रहरोज्ञेयअइउऋओइतिनिदर्शनम् ॥ १० ॥

घात, निर्घात, वज्री, अहर, प्रहर, यह पांच रंग हैं जैसे अ इ उ ऋ ओ यह निदर्शन है ॥ १० ॥

पिपीलिकाआद्यन्तदीर्घानाभ्याआसीदितिनिदर्शनम् ।३१।१३॥
पाकवत्युभयोर्ह्रस्वाविनइन्द्रेतिनिदर्शनम् ॥ ११ ॥

आदि और अन्तमें दीर्घवाली पिपीलिका वृत्ति कहाती है, यथा नाभ्याऽआसीदन्तरिक्षम् इत्यादि । आदि अन्तमें ह्रस्वपाकवती वृत्ति होती है, यथा विनं इन्द्र इत्यादि ॥ ११ ॥

अंतेचवत्सानुसृजितातानेत्यसौऽआवोढमश्विनेतिनि० २०।८३ ।
वत्सानुसारिणीचादौदीर्घाताअस्येतिनि० ॥ १२ ॥

अन्तमें दीर्घ वत्सानुसृजिता होती है, तानेत्यसौआवोढमाश्विना यह उदाहरण है और आदिमें दीर्घ होवे तो वत्सानुसारिणी होती है ता अस्य यह उदाहरण है १२

करिणीकुर्विणीचैवहरिणीहारिणीतिच ॥
तथाहंसपदानामपंचैताःस्वरभक्तयः ॥ १३ ॥

करिणी, कुर्विणी, हरिणी, हारिणी और हंसपदा यह पांच स्वरभक्ति हैं ॥ १३ ॥

करिणीरहयोर्योगेकुर्विणीलहकारयोः ॥
हरिणीरषयोर्योगेहारितंऋपकारयोः ॥ १४ ॥

र, ह के योगमें करिणी, लकार हकारके योगमें कुर्विणी, र ष के योगमें हरिणी, ऋ, षकारके योगमें वा ल, ष के योगमें हारिता ॥ १४ ॥

यातुहंसपदानामसातुरेफषकारयोः ॥ १५ ॥

र, ष के योगमें हंसपदा भक्ति होती है ॥ १५ ॥

देवंबर्हिं २१।५७रितिकरिणीउपवल्हेतिकुर्विणी ॥

हरिणीं अरेषसइत्याहुर्हारिणीशतवल्शेतिच ॥ १६ ॥

देवंबर्हि यह करिणी, उपवल्हेति यह कुर्विणी, दर्शतमिति यह हरिणी शतवल्शेति यह हारिणी ॥ १६ ॥

व्वर्षोवर्षीयसीत्याहुस्तथाहंसपदेतिच६।११॥रलाभ्यांपरऊष्माणोयत्रस्युःस्वरितोदयाः॥स्वरभक्तिरसौज्ञेयापूर्वमाक्रम्य पठ्यते ॥ स्वरभक्तिंप्रयुंजानस्त्रीन्दोषान्परिवर्जयेत् ॥ १७॥

वर्षोवर्षीयसि यह हंसपदा भक्तिका उदाहरण है र, ल, से परे जहां ऊष्माण स्वरितोदय हों इसको स्वरभक्ति जानना, यह पूर्वको आक्रमण कर पढी जाती है स्वरभक्ति प्रयोगमें तीन दोषोंको त्याग करै ॥ १७ ॥

इकारंचाप्युकारंचग्रस्तदोषंतथैवच ॥

एतल्लक्षणमाख्यातंयाज्ञवल्क्येनधीमता ॥ १८ ॥

इकार उकार और ग्रस्तदोष इनका लक्षण बुद्धिमान् याज्ञवल्क्यने कथन किया है ॥ १८ ॥

सम्यक्पाठस्यसिद्ध्यर्थंशिष्याणांहितकाम्यया ॥

अर्धमात्रास्वरंकिंचित्पृथङ्न्यूनमिवोच्चरन् ॥

ऋकारेचहकारेचहृत्कंठमनसानिच ॥ १९ ॥

भलीप्रकार पाठकी सिद्धि और शिष्योंके हितकी कामनासे कहा है, अर्धमात्राका स्वर कुछ पृथक् न्यून उच्चारण करै, ऋकार हकारको हृदय कंठ और मनसे उच्चारण करै ॥ १९ ॥

नैतत्स्वरितपूर्वांगेनापरांगेकथंचन ॥

नस्वरेनचमात्रायांकथंस्वारोविधीयते ॥ २० ॥

यदि कहो कि यह स्वरित पूर्वांग परांग स्वर और मात्रामें जब नहीं तो कैसे स्वरका विधान किया जाय ॥ २० ॥

परांगस्यतुयत्पूर्वंपूर्वांगस्यतुयत्परम् ॥
उभयोरर्द्धसंयोगेस्वारंकुर्याद्विचक्षणः ॥ २१ ॥

जो पर अंगके पूर्व और पूर्वांगके जो पर हो इन दोनोंके अर्ध संयोगमें पंडित को स्वरका प्रयोग करै ॥ २१ ॥

संयोगेतुपरंस्वार्य्यंपरंसंयोगनायकम् ॥
संयुक्तस्यतुवर्णस्यनस्वार्य्यंपूर्वमक्षरम् ॥ २२ ॥

संयोगमें यह स्वर पर और परसंयोगमें नायक कहाता है ऐसा जानना. संयुक्त वर्णका पूर्व अक्षर स्वर नहीं होता ॥ २२ ॥

उदात्तादनुदात्तेतुवामायाभ्रुवआरभेत् ॥
उदात्तात्स्वरितोदात्तौक्रमाद्दक्षिणतोन्यसेत् ॥ २३ ॥

अनुदात्तमें उदात्तसे इसको वामभ्रूसे आरम्भ करे उदात्तमें स्वरित, उदात्तको क्रमसे दक्षिणको लावे ॥ २३ ॥

स्वरितादनुदात्तायेप्रचयस्तान्प्रचक्षते ॥
एकस्वरानपिचतानाहुस्तत्त्वार्थचिन्तकाः ॥ २४ ॥

स्वरितसे उत्तरमें अनुदात्त हो तो उसको तत्त्वज्ञाता प्रचय स्वर कहते हैं, अथवा एकस्वर भी कहते हैं ॥ २४ ॥

प्रचयोयत्रदृश्येततत्रहन्यात्स्वरंबुधः ॥
स्वरितःकेवलोयत्रमृदुस्तत्रनिपातयेत् ॥ २५ ॥

जहां प्रचय दिखाई दे बुद्धिमान् वहां स्वरभंग करै और जहां केवल स्वरित हो वहां मृदु निपातन करे ॥ २५ ॥

दुर्बलस्ययथाराष्ट्रंहरतेबलवान्नृपः ॥
एवंव्यंजनमासाद्यअकारोहरतेस्वरम् ॥ २६ ॥

जैसे बली राजा दुर्बलके राज्यको हरते हैं इसी प्रकार व्यंजनको प्राप्त होकर अकार स्वरको हरण करता है ॥ २६ ॥

उच्चादुच्चतरंनास्तिनीचान्नीचतरंतथा ॥
अक्षरात्तुल्ययोगाच्चनीचेनीचगतानिच ॥ २७ ॥

उच्चसे उच्च और नीचसे नीच नहीं होता, अक्षर तुल्य योगवाले हैं नीच स्वरको प्राप्त होकर नीचे हो जाते हैं ॥ २७ ॥

१ उभयोरर्द्धं इति वा पाठः ।

स्वरउच्चःस्वरोनीचःस्वरःस्वरितएवच ॥
स्वरप्रधानैस्तैःस्त्रार्यव्यंजनंतेनसस्वरम् ॥ २८ ॥

स्वरही उच्च स्वर अनुदात्त, और स्वरही स्वरित होता है, स्वरही स्वरमें प्रधान है उसीसे व्यंजन स्वरवाला कहाता है ॥ २८ ॥

व्यंजनान्यनुवर्ततेयत्रतिष्ठतिसस्वरः ॥
स्वरप्रधानंत्रैस्वर्यमाचार्याःप्रवदंतिहि ॥ २९ ॥

स्वरकी ओरही व्यंजन अपनी अनुवृत्ति करते हैं, इन तीनोंमें स्वरही प्रधान है यह आचार्य कहते हैं ॥ २९ ॥

मणिवद्व्यंजनंविद्यात्सूत्रवच्चस्वरंविदुः ॥
आचार्याःसममिच्छंतिपदच्छेदंतुपंडिताः ॥ ३० ॥

मणिकी समान व्यंजन और सूत्रकी समान स्वर है, आचार्य समकी और पंडित पदच्छेदकी इच्छा करते हैं ॥ ३० ॥

स्त्रियोमधुरमिच्छंतिविक्रुष्टमितरेजनाः ॥
उदात्तंनानुवर्ततेनीचंनस्वरितंतथा ॥ ३१ ॥

स्त्री मधुर पदार्थकी और दूसरे जन वडेपन की इच्छा करते हैं, जो उदात्त अनुदात्त और स्वरितका अनुवर्तन नहीं करते ॥ ३१ ॥

विस्वरं तं विजानीयाद्दीर्घह्रस्वविवर्जितम् ॥ हरिवरुणवरेण्येषुधारा हिपुरुषेषु च ॥ वैश्वानरोनकारे १८।७२ चशेषास्तुस्वरितानकाराः ।
(स्वरितेरफवैश्वानरोनकारः शेषाकारःस्वरितानकाराः) ॥३२॥

ह्रस्व दीर्घसे वर्जित उसको विस्वर जाने, हरि, वरुण, वरेण्य, धारा, पुरुष इनमें रेफ स्वरितत्वके समान आचरण करता है, वैश्वानर शब्दमें नकार स्वरितत्वकी समान आचरण करता है, और शेषमें नकारकोही स्वरितत्व होता है ॥ ३२ ॥

द्वौवरुणौचस्वरितौ उदुत्तमं १२।१२ त्वंवरुण ३३ । ३२ ॥
धारेचैवोरुधारे तु पुरुधारेच दोहने ॥ मात्रिकंवाद्विमात्रंवास्वरितं यदिहाक्षरम् ॥ तस्यादितोर्द्धमात्रावैशेषंचपरतोभवेत् ॥३३॥

उदुत्तमं त्वं वरुण इनमें वरुण शब्दके दो वकारोंमें का एक वकारही स्वरितवत् होता है, रेफ नहीं, ऊरुधारा इत्यादिमें धा शब्दही स्वरितवत् होता है,

१ उदुत्तमं वरुण धारये वेरुधारा उरुधारा च दोहते वा पाठः ।

एक मात्रा वा दो मात्राका जो अक्षर स्वरित हो तो द्विमात्रिकमें आधी मात्रा उदात्त आधी अनुदात्त शेष स्वरित होता है "यह पाणिनिसे विलक्षण है" ॥ ३३ ॥

नकारांतेपदेपूर्वेश्मश्रुभिः २५ । १ परतः स्थिते ॥
छकारंनप्रयुंजीतञशसंधिंसमुच्चरेत् ॥ ३४ ॥

नकरान्त पदके आगे यदि श्मश्रु शब्द हो तो शकारको छकारका प्रयोग न करे ञ और शकी सन्धि करै ॥ ३४ ॥

ओकारः २।१३ प्लुतविज्ञेयः प्लुतमग्राद्वितीयकम् ८ । १० ॥
लाजींञ्छाचीं२३।८तृतीयंचविवेशेति २३।४९ चतुर्थकम् ॥ ३५ ॥

ओकार प्लुत जानना यथा अग्ना द्वितीयकम् । लाजींञ्छाचीं तीसरा और विवेशेति यह चौथा प्रयोग है ॥ ३५ ॥

अधःस्विदासी २३ । ७४ त्पंचमंचोपरिस्विदासीच्चषष्ठकम् ॥
सप्तमंतुक्लिबेस्मार ४०।१५ अष्टमंनैवविद्यते ॥ ऌकारस्यतुदीर्घत्वंनास्तिवाजसनेयिनः ॥ ३६ ॥

अधःस्विदासीत् पांचवां और उपरि स्विदासीत् छठा प्रयोग है, सातवां क्लिंब स्मर और आठवां प्रयोग नहीं है वाजसनेयी शाखावालोंके मतमें ऌकारका दीर्घ नहीं है ॥ ३६ ॥

उच्चस्थानगतेहस्तेस्वरितंनोपपद्यते ॥
अधस्थात्तुयदागच्छेत्स्वरितंनतदाभवेत् ॥ ३७ ॥

हाथके उदात्त मार्गमें प्राप्त होनेसे स्वरित प्रगट नहीं होता, और जब अनुदात्तपनको प्राप्त हो तो स्वरित नहीं होता ॥ ३७ ॥

कचटतपादृश्यंतेसंधिस्थानेषुनित्यशः ॥
स्ववर्गेणैवसंयुक्तामोक्षं[1]कुर्वीततत्रवै ॥ ३८ ॥

क च ट त प यह संधिस्थानमें नित्य दिखाई देते हैं अपने वर्णवालोंसे संयुक्त होकर फिर पृथक् नहीं होते इनको वैसेही विधान करै ॥ ३८ ॥

तकारांतेपदेपूर्वेसकारेपरतःस्थिते ॥
प्रत्यारंभंनकुर्वीतपापावितिनिदर्शनम् ॥ ३९ ॥

जब पूर्वमें तकारान्त पद आगे सकार स्थित हो तो प्रत्यारंभ न करे यथा पापाविति ॥ ३९ ॥

१ मोक्षं तत्र न कारयेदिति वा पाठः ।

ककारांतेपदेपूर्वेसकारेपरतःस्थिते ॥
खसवर्णंविजानीयाद्भिखक्सेतिनिदर्शनम् २१।२६ ॥४०॥

ककारान्त पद पूर्वमें और आगे सकार हो तो खसवर्ण जानै यथा भिखक्सेन इति यह उदाहरण है ॥ ४० ॥

तकारांतेपदेपूर्वेचवर्गेपरतःस्थिते ॥
मोक्षंतत्रापिकुर्वीतयच्च शेपे निदर्शनम् ६। १७॥४१॥

तकारान्त पद पूर्वमें आगे चवर्ग स्थित हो तो वहां वर्ण मोक्ष करै यथा यच्च शेपे यह उदाहरण है कहीं ॥ ४१ ॥

ङकारांतेपदेपूर्वेसकारेपरतःस्थिते ॥
कसवर्णंविजानीयात्प्राङ्क्सोमेतिनिदर्शनम् १९।३।४२

पूर्वमें ङकारान्त पद हो आगे सकार स्थित हो तो उसका सवर्णी 'क' जानना, प्राङ्क्सोमः यह उदाहरण है ॥ ४२ ॥

टकारांतेपदेपूर्वेसकारेपरतःस्थिते॥
टसवर्णंविजानीयात्सम्राट्संभृतेतिनिदर्शनम्३९।४।४३

जो पूर्वमें टकारान्त पद हो आगे सकार स्थित हो तो टकार सवर्णी हो यथा सम्राट् संभृत इति ॥ ४३ ॥

तकारांतेपदेपूर्वेसकारेपरतःस्थिते ॥
छसवर्णंविजानीयात्तत्सवितुर्निदर्शनम् ३।३५॥४४॥

तकारान्त पद पूर्वमें हो आगे सकार हो तो 'छ' सवर्णी हो तत्सवितु० यह उदाहरण है ॥ ४४ ॥

नकारांतेपदेपूर्वेसकारेपरतःस्थिते ॥
तसवर्णंविजानीयात्त्रीन्त्समुद्रेतिनिदर्शनम्१३।३१।४५[1]

नकारान्त पद पूर्वमें हो सकार आगे हो तो त सवर्णी हो यथा त्रीन्त्समुद्रान् यह उदाहरण है ॥ ४५ ॥

पकारांतेपदेपूर्वेशकारेपरतःस्थिते ॥
छसवर्णंविजानीयादनुष्टुप्छारदीतिनिदर्शनम् १३।५७॥४६

१ नैतन्माध्यंदिनीयानां सस्थानत्वात्तयोर्द्वयोः । छस्थानेपि द्वितीयं स्यादापस्तम्बस्य यन्मतम् ।। इत्यधिकः पाठः ।

पकरान्त पद पूर्वमें हो आगे शकार हो तो छ सवर्णी जाने अनुष्टुप छारदी यह उदाहरण है ॥ ४६ ॥

मकारांतेपदेपूर्वेसवर्णेपरतः स्थिते ॥
मसवर्णंविजानीयादिमम्मेतिनिदर्शनम् २१ । १ ॥ ४७ ॥

मकारान्त पदके आगे सकार हो तो सवर्णी मकार हो 'इमम्मे' यह उदाहरण है ॥ ४७ ॥

वर्णेतुमात्रिकेपूर्वेअनुस्वारोद्विमात्रिकः ॥
द्विमात्रेमात्रिकोज्ञेयः संयोगाद्ध्रस्वयोभवेत् ॥ ४८ ॥

एक मात्रावाले वर्णके आगे अनुस्वार द्विमात्रिक होताहै उसे द्विमात्रिक द्विमात्रावाला जानो, संयोगके पहलेका एक मात्रावाला द्विमात्रिक होताहै ॥ ४८ ॥

अनुस्वारोद्विमात्रःस्याद्दवर्णव्यंजनादिगः ॥
ह्रस्वाद्वायदिवादीर्घादेवानाᳬंहृदयेभ्य इति नि० ।१६।४६।४९

अनुस्वार दो मात्रावाला होताहै ऋवर्ण व्यंजनके पूर्वमें प्राप्त हुआ हो तो द्विमात्रिक होता है, ह्रस्व वा दीर्घ चाहैं किसीसे परे हो देवानां हृदयेभ्यः यह उदाहरण है ॥ ४९ ॥

अनुस्वारस्योपरिष्टात्संवृतंयत्रदृश्यते ॥
दीर्घंतंतुविजानीयाच्छ्रोताग्रावाणेतिनिदर्शनम्६।२६॥५०

अनुस्वारके आगे यदि संवृत प्रयत्नवाला वर्ण दीखे तो उसे दीर्घ जाने, श्रोता ग्रावाणः यह उदाहरण है ॥ ५० ॥

अनुस्वारस्योपरिष्टात्संयोगोयत्रदृश्यते ॥
ह्रस्वंतंतुविजानीयात्सᳬंस्थेतिनिदर्शनम् ॥ ५१ ॥

अनुस्वारके ऊपर जहां संयोग दीखै उसे ह्रस्व जाने सᳬंस्था यह दृष्टान्त है ॥५१॥

अनुस्वारश्चयोदीर्घादक्षराद्योभवेत्परः ॥
सतुह्रस्वइतिज्ञेयोमंत्रेष्वेवविभाषया ॥ ५२ ॥

दीर्घ अक्षरसे परे जो अनुस्वार हो, वह विकल्प करके मंत्रोंमें ह्रस्व होता है॥५२॥

ओभावश्चविवृत्तिश्चशषसारेफएवच ॥
जिह्वामूलमुपध्माचगतिरष्टविधोष्मणः ॥ ५३ ॥

ओभाव, विवृत्ति, श, ष, स, रेफ, जिह्वामूलीय, उपध्मानीय, यह आठ प्रकारकी ऊष्माकी गति है ॥ ५३ ॥

यथाभावप्रसंधानमुकारादिपरंपदम् ॥
स्वरांतंतादृशंविद्याद्यदन्यद्व्यक्तमूष्मणः ॥ ५४ ॥

ओभावके आगे यदि उकारादि पद हो तो उसे स्वरान्त जाने और इससे अन्यत्र ऊष्माका ओभाव जाने ॥ ५४ ॥

ओंभावादुत्थितश्चोष्मातांतुकेलिंविनिर्दिशेत् ॥
विवृत्तंप्रतियाऊष्माविज्ञेयाविकठानना ॥ ५५ ॥

ओभावको प्राप्त हुई ऊष्माकेलि कहाती है, और विवृत्तिके आगे जो ऊष्मा हो उसे विकठानना कहते हैं ॥ ५५ ॥

लीढातिलीढाविद्युच्चशषसेषुप्रकीर्तिताः ॥
जिह्वामूलेचरेफेचविज्ञेयाविठकाशठा ॥ ५६ ॥

लीढ अतिलीढ और विद्युत् यह क्रमसे श ष स में कही है, अर्थात् नाम है जिह्वामूलीय और रेफ यह विठक और शठ नामवाले हैं ॥ ५६ ॥

उपध्मानीयसहितांपुष्पिणींतांविनिर्दिशेत् ॥
अन्यत्रयाभवेदूष्मासुलभांतांविनिर्दिशेत् ॥ ५७ ॥

उपध्मानीयके सहित ऊष्माको पुष्पिणी कहते हैं; इसके शिवाय अन्य ऊष्मा सुलभा कहाती है ॥ ५७ ॥

पादाद्यंतंपदाद्यंतंतथावग्रहकालिकम् ॥
ईषत्स्पृष्टंविजानीयात्तस्मिन्कालेतुकारयेत् ॥ ५८ ॥

पादके वा पदके अन्तके अक्षर वा अवग्रह स्वरके अक्षरको ईषत्स्पृष्ट प्रयत्न जाने, यह उस उच्चारण कालमें ही जाने ॥ ५८ ॥

पादादौचपदादौचसंयोगावग्रहेषुच ॥
जःशब्दइतिविज्ञेयोयोन्यःसयइतिस्मृतः ॥
उपसर्गपरोयस्तुपदादिरपिदृश्यते ॥ ५९ ॥

---

१ ओभावमानना इति वा पाठः । २ चपला तथा वा पाठः ।

पादकी आदिमें वा पदकी आदिमें वा संयोग और अवग्रहमें 'य' का 'ज' उच्चारण करे, इससे अन्यको यकारही उच्चारण करना चाहिये जो उपसर्गसे परे और पदकी आदिमें दीखे ॥ ५९ ॥

ईषत्स्पृष्टंयथाविद्युत्पदच्छेदात्परंभवेत् ॥
त्वदर्थंवाचिनौवोवां वावेयदिनिपातजौ ॥ ६० ॥

वह अक्षर ईषत्स्पृष्ट प्रयत्न हैं, यथा विद्युत् परन्तु पद और छन्द करनेपर हो त्वदर्थ ( तुम्हारे ) अर्थ वाची वो वां वा वे यदि निपातसे हुए हैं ॥ ६० ॥

आदेशश्चविकल्पार्थाईषत्स्पृष्टाइतिस्मृताः ॥
विभाषयायकारःस्यात्तथानेतिपदात्परः ॥ ६१ ॥

तो इनको ईषत्स्पृष्ट प्रयत्न जाने, और निपातन किये विकल्प अर्थवाले आदेश हैं क्योंकि पाणिनिशास्त्रमें भी आदेश विकल्पार्थ कहे हैं, नकारके आगे यदि यकार हो तो उसके स्थानमें नकारका उच्चारण विकल्पसे होता है ॥ ६१ ॥

भवन्तेत्यपिपूर्वैवतथाचसपदादपि ॥
यदेवलक्षणंयस्यवकारस्यापितद्भवेत् ॥ ६२ ॥
यत्रयत्रविशेषःस्यादिदानींससकथ्यते ॥
वकारस्त्रिविधःप्रोक्तोगुरुर्लघुर्लघूतरः ॥ ६३ ॥

और पूर्वमें तथा सपदके आगे भी जानना जो लक्षण यकारका है वही वकारका जानो, जो जहां जहां विशेष है सो अब कहते हैं वकारके तीन भेद हैं गुरु लघु लघुतर ॥ ६२ ॥ ६३ ॥

आदौगुरुर्लघुर्मध्येपदांतेचलघूतरः ॥ ६४ ॥

आदिमें गुरु मध्यमें लघु और पदान्तमें हो तो लघुतर कहाता है ॥ ६४ ॥

यवर्णस्त्रिविधःप्रोक्तोगुरुर्लघुर्लघूतरः ॥
आदौगुरुर्लघुर्मध्येपदान्तेतुलघूतरः ॥ ६५ ॥

यकारके भी तीन भेद हैं गुरु लघु लघुतर आदिमें गुरु मध्यमें लघु और पदान्तमें लघुतर कहाता है ॥ ६५ ॥

सन्धिजौतुपदान्तीयावुपसर्गपरौलघू ॥
अथमासनशब्देभ्योविभाषाम्रेडितेयवौ ॥ ६६ ॥

सन्धि करनेसे हुए पदान्तके, उपसर्गसे आगे हो तो लघु य और व मा स न शब्दोंसे परे वा द्विरुक्तिमें विकल्प करके लघुतर जाने ॥ ६६ ॥

पञ्चमादुत्तरोयोवोयदिचैकपदेभवेत् ॥
संहितायांलघुःसोपिपदकालेगुरुर्भवेत् ॥ ६७ ॥

वर्गके पांचवें अक्षरसे आगे य, व, यदि एक पदमें हों तो संहितामें यह लघु हुए भी पदके समय गुरु हो जाते हैं ॥ ६७ ॥

हकारेरेफसंयुक्तऋवर्णोदयएषवा ॥
सुस्पृष्टंतंविजानीयाद्यकारोनान्ययुग्यदि ॥ ६८ ॥

( जात्य और स्वरितमें जहां वकार हो तो दोनों को ही निक्षेप करै यथा वायव्यै और जात्य स्वरितमें यकार हो तो दोनोंका क्षप करै यथा सदस्यै ७ । ४९ यह उदाहरण हैं पहले कह चुके हैं ) रेफसंयुक्त हकार और ऋवर्णमें स्पृष्ट प्रयत्न जाने यदि यकार दूसरेमें संयुक्त न हो तो ॥ ६८ ॥

उपांशुस्त्वरितंचैवयोधीतेवित्रसन्नपि ॥
अपरूपसहस्राणांसंदेहेषुप्रवर्तते ॥ ६९ ॥

जो अप्रकाशित तथा बहुत सहजमें तथा शीघ्रतासे व्याकुलतापूर्वक पढता है, वह सहस्रों भ्रष्टरूपोंके सन्देहों में पडता है ॥ ६९ ॥

पंचविद्यांनगृह्णंतिजडाःस्तब्धाश्चयेनराः ॥
आलसाश्चातिरोगाश्चयेषांचविस्मृतंमनः ॥ ७० ॥

महामूढ स्तब्ध, आलसी, रोगी और भूलनेवाले यह पांच विद्याको नहीं प्राप्त करते ॥ ७० ॥

अहेरिवगणाद्भीतःसंमानान्नरकादिव ॥
राक्षसीभ्यइवस्त्रीभ्यःसविद्यामधिगच्छति ॥ ७१ ॥

जो संघ समूहसे सर्पकी समान, सन्मानसे नरककी समान, स्त्रियोंसे राक्षसियोंकी समान डरता है, वही विद्याको प्राप्त होता है ॥ ७२ ॥

---

१ अहेरिव गुणाद्भीतः वा पाठः ।

नभोजनविलंबीस्यान्नचनारीनिबंधनः ॥
सुदूरमपिविद्यार्थीव्रजेद्गरुडहंसवत् ॥ ७२ ॥

भोजन करनेमें देर न करे, स्त्रियोंके बंधनमें न रहे और गुरुस्थान दूर होवे तो भी गरुड तथा हंसकी समान अतिशीघ्र वहां जापहुँचे ॥ ७२ ॥

यथाखनन्खनित्रेणनरोवार्यधिगच्छति ॥
तथागुरुगतांविद्यांशुश्रूषुरधिगच्छति ॥ ७३ ॥

जैसे कुदालसे खोदता हुआ मनुष्य जलको प्राप्त करता है, इसी प्रकार शुश्रूषा करनेवाला गुरुकी विद्याको प्राप्त करलेता है ॥ ७३ ॥

सुखार्थीचेत्त्यजेद्विद्यांविद्यार्थीचेत्त्यजेत्सुखम् ॥
सुखिनश्चकुतोविद्यासुखंविद्यार्थिनःकुतः ॥ ७४ ॥

जो सुखकी इच्छा करे वह विद्या नहीं पढ सकता, जो विद्यार्थी होना चाहे वह सुखकी अभिलाषा न करे, सुखियोंको विद्या कहां और विद्यार्थियोंको सुख कहां॥७४

गुणिताशतशोविद्यासहस्रावर्तितापुनः ॥
आगमिष्यतिजिह्वाग्रेस्थलान्निम्नमिवोदकम् ॥ ७५ ॥

सैकडोंवार गुनी हुई सहस्रोंवार आवृत्ति कीहुई विद्या जिह्वाके अग्रभागमें उपस्थित होती है, जैसे नीचे स्थानमें स्थलसे जल ॥ ७५ ॥

शतेनगुणिताविद्यासहस्रेणचतिष्ठति ॥
शतानांचसहस्रेणप्रत्यंचमवतिष्ठति ॥ ७६ ॥

सौ आवृत्तिसे गुणित होती, और सहस्रवार आवृत्तिसे स्थित रहती है और लक्ष आवृत्तिसे पूजित रहती है, सदा उपस्थित रहती है ॥ ७६ ॥

जलमभ्यासयोगेनशिलायांकुरुतेक्षयम् ॥
कर्कशानांमृदुस्पर्शंकिमभ्यासान्नसाध्यते ॥ ७७ ॥

जैसे जलके अभ्याससे शिलाओंमें मार्ग पडजाते हैं, कठिन वस्तुओंके स्पर्शमें मृदुता होती है, ऐसेही अभ्याससे क्या २ सिद्ध नहीं होता ॥ ७७ ॥

गुरुशुश्रूषयाविद्यापुष्कलेनधनेनवा ॥
अथवाविद्ययाविद्याचतुर्थंनोपलभ्यते ॥ ७८ ॥

गुरुकी महती सेवासे वा अधिक धनसे अथवा विद्याके बदलनेसे विद्या प्राप्त होती है ॥ ७८ ॥

शुश्रूषारहिताविद्याह्यल्पमेधागुणैःसह ॥
वंध्याचयौवनीतस्यानविद्याफलिनीभवेत् ॥ ७९ ॥

जो विद्या गुरुकी शुश्रूषासे रहित है, तथा अल्पबुद्धि और अल्प गुणसे ग्रहण की हुई है यौवनवती वन्ध्याकी समान वह विद्या फलवती नहीं होती ॥ ७९ ॥

हयानामिवजात्यानामर्धमात्रार्द्धशायिनाम् ॥
नहिविद्यार्थिनांनिद्राचिरंनेत्रेषुतिष्ठति ॥ ८० ॥

जैसे जात्य संज्ञक घोडे अर्धमात्रापर्यंत शयन करते हैं, इसी प्रकार विद्यार्थियोंके नेत्रोंमें चिरकालतक निद्रा स्थित नहीं रहती ॥ ८० ॥

यथापिपीलिकैःपांसुर्वल्मीकंक्रियतेमहान् ॥
नतत्रबलसामर्थ्यमुद्यमस्तत्रकारणम् ॥ ८१ ॥

जैसे पिपीलिका धूलिके कणोंसे बडी वल्मीक बनालेती है उसमें बलकी बात नहीं है, केवल इसमें उद्योगही कारण है, ऐसेही उद्योगसे विद्या आती है ॥ ८१ ॥

अंजनस्यक्षयंदृष्ट्वावल्मीकस्यतुसंचयम् ॥
अवंध्यंदिवसंकुर्याद्दानाध्ययनकर्मसु ॥ ८२ ॥

सुरमेका क्षय और बमईका सञ्चय देखकर दान अध्ययनके कर्मोंमें निरन्तर समय व्यतीत करे ॥ ८२ ॥

अन्नव्यंजनयोर्भागस्तृतीयमुदकस्यच ॥
वायोःसंचारणार्थायचतुर्थमुपकल्पयेत् ॥ ८३ ॥

उदरके चार भाग कल्पना करके दो भाग अन्न व्यञ्जनके तीसरा जलका और चौथा वायु सञ्चरणका रक्खे ॥ ८३ ॥

हकारंपंचमैर्युक्तमंतस्थैश्चापिसंयुतम् ॥
औरसंतंविजानीयात्कंठ्यमाहुरसंयुतम् ॥ ८४ ॥

हकार पांचमें अक्षर तथा अन्तस्थ अक्षरसे संयुक्त हो, तो उसको उरस्य जाने, और असंयुक्त हकारका स्थान कण्ठ है ॥ ८४ ॥

हकारोयत्रपूर्वस्थोअन्तस्थाद्योभवेत्परः ॥
पदकालेवियुज्येतसंहितायांसऔरसः ॥ ८५ ॥

जहां हकार पूर्वमें स्थित हो और अन्तस्थसे परे हो जो पदके समय पृथक् हो जाय, वह संहितामें हृदयस्थानी कहा है ॥ ८५ ॥

मेघदुंदुभिनिर्घोषोज्ञायतेपयसोह्रदात् ॥
एवंनादंप्रयोक्तव्यंसिंहस्यरुदितंयथा ॥ ८६ ॥

जैसे ह्रद (कुण्ड) से निकलते समय जलका मेघ दुन्दुभिकी समान शब्द होता है, अथवा जैसे सिंह गरजता है, इस प्रकार नाद करना चाहिये ॥ ८६ ॥

मासेभाद्रपदेमेघाःशब्दंकुर्वंतियादृशम् ॥
एवंगह्वरमासाद्यशुक्रं ३।१६ दुदुह्रेतिदर्शनम् ॥ ८७ ॥

भादों मासमें मेघ जैसा शब्द करते हैं, इसी प्रकार एकान्तमें शब्दोच्चारण करे 'शुक्रं दुदुह्रे' यह जैसे उदाहरण है ॥ ८७ ॥

शेषाणांवानरायुद्धमुत्पतंतिपतंतिच ॥
एवंवर्णाःप्रयोक्तव्याइहेहैषान्निदर्शनम् ॥ ८८ ॥

और शेष अक्षरोंको जैसे वानर युद्धमें उछलते कूदते हैं, इस प्रकारसे प्रयोग करे यथा 'इहेहैषां' ॥ ८८ ॥

यथापुत्रवतीस्नेहाच्चुंबतेनिजमौरसम् ॥
एवंवर्णाःप्रयोक्तव्यायुञ्जानेतिनिदर्शनम् १।१।१ ॥ ८९ ॥

जैसे पुत्रवती स्त्री प्रेमसे अपने पुत्रका मुख चूमती है, इस प्रकारसे दो सवर्णी वर्णोंका प्रयोग करै जैसे 'युञ्जानः' ११।१ ॥ ८९ ॥

दर्दुरोदरदेशौतुप्रफुल्लेतेपुनर्यथा ॥
एवंवर्णाःप्रयोक्तव्याअपांफेनेतिनिदर्शनम् १९।७१ ॥ ९० ॥

जैसे मेंडकका पेट बारंबार फूलता है इसी प्रकार वर्णोंका उदरसे आरम्भ कर प्रयोग करै 'अपांफेनेन' यह उदाहरण है ॥ ९० ॥

यथाभाराभरक्रांतानिश्वसंतिनराभुवि ॥
एवंवर्णाःप्रयोक्तव्याअद्भ्यःसंभृतइत्यपि३१।१७ ॥ ९१ ॥

जैसे भारवाले पुरुष बारंबार श्वास लेते हैं, इसी प्रकार कई मिले वर्णोंका प्रयोग करै यथा 'अद्भ्यः सम्भृतः' इति ॥ ९१ ॥

कुक्कुटःकामलुब्धश्चककारद्वयमुच्चरेत् ॥
एवंवर्णाःप्रयोक्तव्याःकुक्कुटोसीतिनिदर्शनम् १।१६॥ ९२ ॥

जैसे कामसे लुब्ध हुआ कुक्कुट दो ककारका उच्चारण करता है इसी प्रकार दो वर्णोंका प्रयोग करै 'कुक्कुटोऽसि' यह उदाहरण है ॥ ९२ ॥

वडवाचहयंदृष्ट्वायोनिंविकुरुतेयथा ॥
एवंवर्णाःप्रयोक्तव्याःसुदुंदुभेतिदर्शनम् २१।८९ ॥ ९३ ॥

जैसे घोडी घोडेको देखकर अपनी योनिको चालन करती है, इसी प्रकार वर्णोंका प्रयोग करै, 'सुदुन्दुभे' यह उदाहरण है ॥ ९३ ॥

यथाकामातुरानारीशब्दंकुर्याद्दिनेदिने ॥
तच्छब्दंकुरुतेप्राज्ञःसिꣳह्यसिनिदर्शनम्५।१२॥ ९४ ॥

जैसे कामातुरा स्त्री दिन दिन इच्छाके शब्द करती है इसी प्रकार विद्वान् सानुस्वार शब्द करै, यथा 'सिꣳह्यसि' ॥ ९४ ॥

पक्षीवितत्यखेगृध्रोभ्रान्त्यासंकुच्यतिष्ठति ॥
एवंवर्णाःप्रयोक्तव्यावार्ध्रीनसोनिदर्शनम्२४।३९॥ ९५ ॥

जिस प्रकार गृध्र आकाशमें पक्ष विस्तृत करके भ्रमण करता स्थित होता है और संकुचित होता है इसी प्रकार वर्णोंका प्रयोग संकोच विकाशयुक्त करै, यथा 'वार्ध्रीनसः' यह उदाहरण है ॥ ९५ ॥

रंगेचैवसमुत्पन्नेनोग्रसेत्पूर्वमक्षरम् ॥
स्वरंदीर्घंप्रयुंजीतपश्चान्नासिक्यमाचरेत् ॥ ९६ ॥

रंगके उत्पन्न होनेसे पहले अक्षरको ग्रास न करै, दीर्घ स्वरका प्रयोग करके पीछे अनुनासिक उच्चारण करै ॥ ९६ ॥

यथासौराष्ट्रिकानारीअराँइत्यभिभाषते ॥
एवंरंगःप्रवक्तव्योङकारःपरिवर्जितः ॥ ९७ ॥

जैसे सौराष्ट्र देशकी स्त्री अराँ इस प्रकारका भाषण करती है, इस प्रकारसे रंगका प्रयोग करै ङकारको छोडकर ॥ ९७ ॥

द्विमात्रिकोमात्रिकोवानासामूलंसमाश्रितः ॥
अन्तेप्रयुंजतेरंगःपंचमैःसानुनासिकः ॥ ९८ ॥

द्विमात्रिक वा एक मात्रिक नासिकामूलमें आश्रित होनेसे अन्तमें रंगका प्रयोग होता है, और पांचवें वर्णको अनुनासिक होता है ॥ ९८ ॥

अनंतरंमकारस्ययोरंगस्तत्ररंज्यते ॥
सर्वानुनासिकंविद्यादेषावध्योपधानिका ॥ ९९ ॥

मकारके अनन्तर जो रंग अक्षर हो वह सर्वानुनासिक जाने यह वर्ण्योपधानिका संज्ञा है ॥ ९९ ॥

यरलवशषसहरज्यंतेचोपधानिका ॥
वर्गांतेरंगतेयस्तुसर्वैःसर्वानुनासिका ॥ १०० ॥

य र ल व श ष स ह यह रंग अक्षरके संग बोले जांय उसको वर्ण्योपधानिका कहते हैं, वर्गान्तमें जो रंग है वह सबके द्वारा सर्वानुनासिक कहा जाता है ॥१००॥

नासादुत्पद्यतेरंगःकांस्येनसमनिःस्वनः ॥
मृदुश्चैवद्विमात्रःस्याद्वृष्टिमान्स्यान्निदर्शनम् ७।४०॥ १ ॥

कांसीकी समान शब्दवाला रंग नासिकासे उत्पन्न होता है, जो मृदु हो वह द्विमात्रिक होता है 'वृष्टिमान् इवेति' यह उदाहरण है ॥ १ ॥

यथाव्याघ्रीहरेत्पुत्रान्दंष्ट्राभिर्नचपीडयेत् ॥
भीतापतनभेदाभ्यांतद्वद्वर्णान्प्रयोजयेत् ॥ २ ॥

जैसे व्याघ्री डाढोंसे पुत्रोंको पीडा न देती हुई हरण करती है, इस प्रकार स्खलित न करता हुआ वर्णोंको उच्चारण करै ॥ २ ॥

मधुरंचनचाव्यक्तंव्यक्तंचापिनपीडितम् ॥
सनाथस्यैकदेशस्यनवर्णाःसंकरंगताः ॥ ३ ॥

वाक्य मधुर हो, पर अस्फुट न हो, स्फुट हो परन्तु दूसरे वर्णोंसे पीडित न हो सब पूरे उच्चारण किये जायं संकर न हो जायँ ॥ ३ ॥

यथासुमत्तनागेंद्रःपदात्पदंनिधापयेत् ॥
एवंपदंपदाद्यंतंदर्शनीयंपृथक्पृथक् ॥ ४ ॥

जैसे मत्त हाथी पदके उपरान्त पद रखता है, इस प्रकारसे पद पदान्त पृथक् २ दिखाने चाहिये ॥ ४ ॥

गीतीशीघ्रीशिरःकंपीयथालिखितपाठकः ॥
अनर्थज्ञोल्पकण्ठश्चषडेतेपाठकाधमाः ॥ ५ ॥

गीतसा गाकर पढना, शीघ्रतासे पढना, शिर कंपित करके पढना, जैसा शुद्धाशुद्ध लिखा वैसा पढना, अर्थका न जानना, अल्पकंठ होना यह छः प्रकारके अधम पढनेवाले हैं ॥ ५ ॥

माधुर्यमक्षरव्यक्तिःपदच्छेदस्तुसुस्वरः ॥
धैर्यंलयसमत्वंचषडेतेपाठकागुणाः ॥ ६ ॥

मधुरता, अक्षरोंकी स्फुटता, पदच्छेद करना, स्वरसे पढना, धीरता लय होना यह छः पढनेवालोंके गुण हैं ॥ ६ ॥

चतुरक्षरषट्कंचनिवर्तेतपुनःपुनः ॥
आवर्ततेपदंयच्चद्विस्त्रिराम्रेडितंहितत् ॥ ७ ॥

चार छः अक्षरोंको वारंवार आवर्तित करे जो पद दो तीन वार आवृत्ति किया जाय वह आम्रेडित कहाता है ॥ ७ ॥

यथाधाम्नेधाम्नेतियजुषेयजुषेतिनिदर्शनम् १ । ३० ॥
हीयतेवर्धतेचापिपदंयत्रकृशोदरम् ॥
उपचारःसविज्ञेयउभेसुश्चंद्रेतिनिदर्शनम् ॥ ८ ॥

यथा धाम्ने २ । यजुषे यजुषे यह उदाहरण हैं, जिस प्रकार उदर कृश होकर वढता, सुकडता है ऐसा जो पद उच्चारण हो वह उपचार कहाता है, 'उभेसुश्चन्द्र' यह उदाहरण है ॥ ८ ॥

अथसप्तविधाःसंयोगपिण्डाः ।

अव सात प्रकारके संयोगपिण्ड कहते हैं ।

अयस्पिंडोदारुपिंडऊर्णापिंडोज्वालापिंडोमृत्पिंडोवायुपिंडोवज्र पिंडश्चेति ॥ यमान्विद्यादयःपिंडान्सांतस्थंदारुपिंडवत् ॥ अंतस्थं यमवर्जंतुऊर्णापिंडंविनिर्दिशेत् ॥ १ ॥

अयस्पिण्ड, दारुपिण्ड, ऊर्णापिण्ड, मृत्पिण्ड, ज्वालापिण्ड, वायुपिण्ड और वज्रपिण्ड यह सात पिण्ड हैं, यमोंको अयःपिण्ड, सान्तस्थोंको दारुपिण्ड, यम-रहित अन्तस्थोंको ऊर्णापिण्ड जाने ॥ १ ॥

अंतस्थंयमसंयोगेविशेषोनोपलभ्यते ॥
अशरीरंयमंविद्यादंतस्थंपिंडनायकम् ॥ २ ॥

अन्तस्थ और यमके संयोगोंमें विशेष नहीं जाना जाता, यमको अशरीर और अन्तस्थको पिण्डनायक जाने ॥ २ ॥

ज्वालापिंडान्सनासिक्यान्सानुस्वारांस्तुमृन्मयान् ॥
सोपध्मावायुपिंडाश्चजिह्वामूलेतुवज्रिणः ॥ ३ ॥

नासिक्य वर्णोंको ज्वालापिण्ड, स्वरोंको मृन्मयपिण्ड जाने, उपध्मानियोंको वायुपिण्ड और जिह्वामूलियोंको वज्रपिण्ड जाने ॥ ३ ॥

अयःपिंडोनामयथा । अग्निः २३ । १७ पत्नीः ।तनच्मि १ । ४ दारुपिंडोनामयथा।अश्वं÷२४ । १ सूर्यं÷२३ । १० विश्वजनस्यंइतिभवति ५।२८ । तत्रऊर्णापिंडोनामयथा ॥ अस्मिन् ३।१ यस्मिन् २० । ७८ अमुष्मिन् १७ । २ इति भवति॥ तत्रज्वालापिंडोनामयथा । ब्रह्म १३।२ वह्नितमम् १।८गृह्णामीतिभवति ।तत्रमृत्पिंडोनामयथा॥स१९।२९ स्थाम्।सस्कर्त्तारःसस्वर्तइति । तत्रवायुपिंडोनामयथा। देवसवितः९।१युञ्जानःप्रथमम्११।१प्रादिवःकुत्सुप्तमितिभवति॥तत्रवज्रपिंडोनामयथा । इष्कृतिं १२ । ८३ निष्कृतिं ऋक्सामयोः ४।९इतिभवति ॥ प्रथमेनपकारेणसकारेणैव संयुतम्॥एतत्स्वरंसमासाद्यअग्निष्वात्तानिदर्शनम् ।१९।६१॥४

अयःपिण्ड जैसे अग्नीः इत्यादि, दारुपिण्ड जैसे अश्वः इत्यादि, ऊर्णापिण्ड जैसे यस्मिन् इत्यादि, ज्वालापिण्ड जैसे ब्रह्म इत्यादि, मृत्पिण्ड जैसे सछंस्थाम् इत्यादि, वायु पिण्ड यथा देवसवितः इत्यादि, वज्रपिण्ड जैसे इष्कृतिः इत्यादि. यदि प्रथम षकारका सकारसे संयोग हो तो सको षकार होकर इस स्वरसे ' अग्निष्वात्ता ' यह संयोग होता है ॥ ४ ॥

प्रथमेनठकारेणथकारेणैवसंयुतम् ॥
एतत्स्वरंसमासाद्यअधिष्ठाननिदर्शनम् १७ । १८ ॥ ५ ॥

प्रथम ठकार और थकारके संयोगसे ' अधिष्ठान ' उदाहरण होता है, कहीं षकार ठकारका संयोग ऐसा लिखा है ॥ ५ ॥

प्रथमेनणकारेणनकारेणैवसंयुतम् ॥
एतत्स्वरंसमासाद्यत्रिणवत्रयस्त्रिंशावितिनिदर्शनम्१०।१४॥६॥

पहले णकारका नकारसेही संयोग होय तो इस स्वरसे त्रिणवत्रयस्त्रिंशौ, यह स्वर होता है ॥ ६ ॥

प्रथमेनैवरंगेणनकारेणैवसंयुतम् ॥
एतद्रञ्जितमासाद्यवृष्टिमानितिनिदर्शनम् ७।४०॥७॥

पहले रंगका नकारसे संयोग हो तो इस रंगको: प्राप्त होकर 'वृष्टिमाँ २ ॥' उदाहरण होता है ७।४० ॥ ७ ॥

एतेककारादयोमकारपर्यवसानाःकृष्णाव्याख्याताः। शनैश्चरदैवत्याः।चत्वार्यंतस्थायरलवाःकपिलवर्णाःअग्निदैवत्याः।चत्वार्यूष्माणःशषसहा अरुणवर्णाःआदित्यदैवत्याः॥त्रयस्त्रिंशद्व्यंजनानिस्पर्शाअंतस्थाऊष्माणश्चेति। चतुर्विधंकरणम्॥स्पृष्टमस्पृष्टंसंवृतंविवृतंचेति ॥ संवृतोघोषाविवृताघोषाः । विंशतिर्घोषास्तेगजडदबाघझढधभाङञणनमाःयरलवाश्चेति। त्रयोदश अघोषास्तेकचटतपाःखछठथफाःशषसाश्चेति।षड्विधमास्यप्रयत्नम् ॥ संवृतंविवृतमस्पृष्टंस्पृष्टमीषत्स्पृष्टंचार्द्धस्पृष्टंचेति। तत्र। अकारःसंवृतोज्ञेयइतरेविवृताःस्वराः ॥ सर्वेचतेस्युरस्पृष्टाः स्पर्शाःस्पृष्टाभवन्तिहि ॥ ८ ॥

यह ककारसे लेकर मकारपर्यंत २५ स्पर्श वर्ण कृष्णवर्ण शनैश्चर देवतावाले हैं, चार अन्तस्थ यरलव कपिलवर्ण अग्नि देवतावाले हैं चार ऊष्माण शषसह अरुणवर्ण आदित्य देवतावाले हैं, इस प्रकार स्पर्श ऊष्म अन्तस्थ यह ३३ व्यञ्जन हैं. चार प्रकारका करण है स्पृष्ट अस्पृष्ट संवृत विवृत्त, संवृत घोष और विवृत्त अघोष हैं बीस वर्ण घोष प्रयत्नवाले हैं वे—ग ज ड द ब, घ झ ढ ध भ, ङ ञ ण न म, य र ल व, तेरह अघोष हैं, क च ट त प, ख छ ठ थ फ, श ष स, आस्यप्रयत्न छः प्रकारका है संवृत, विवृत, अस्पृष्ट, स्पृष्ट, ईषत्स्पृष्ट और अर्धस्पृष्ट. अकारका संवृत प्रयत्न और सब स्वर विवृत प्रयत्नवाले हैं. और यह सबही अस्पृष्ट हैं, स्पर्श वर्ण स्पृष्ट प्रयत्नवाले हैं ॥ ८ ॥

ईषत्स्पृष्टास्तथान्तस्थाऊष्माणोर्द्धस्पृशःस्वराः ॥
सामान्यंभजतेवर्णःसंस्थानकरणस्यहि ॥ ९ ॥

अन्तस्थ ईषत्स्पृष्ट और ऊष्माण अर्धस्पृष्ट हैं, यह वर्ण सामान्यतासे अपने करण स्थानको प्राप्त होते हैं ॥ ९ ॥

ऋलोर्मध्येभवत्यर्धमात्रारेफलकारयोः ॥
तस्मादस्पृष्टतानस्यादॄॣकारनिरूपणे ॥ १० ॥

ऋ ऌके मध्यमें रेफ लकारकी आधी मात्रा है, इससे ऋ ऌके निरूपणमें अस्पृष्टता नहीं होती ॥ १० ॥

वर्गाणांप्रथमाद्वितीयाः शषसहाश्चाघोषाघोषास्त्वन्येदशधावर्णाभवन्ति । अष्टौवर्णस्थानानि भवंति औरस्यकंठचमूर्धन्यतालुदंत्योष्ठ्यदन्तमूलजिह्वामूलयमानुनासिक्याश्चेति ॥ द्वौ औरस्यौहह्वाइतिअआआ३अवर्णहकारविसर्जनीया इति। त्रयः कंठ्याः। ऋषट्मूर्द्धन्याः। टठडढणष ३ इति। दशतालव्याः। चछजझञयशइईई ३ इति। अष्टौदंत्याः । तथदधनऌलसाः अष्टावोष्ठ्याः। पफबभमाउऊऊ ३ वउपध्माचेत्यादयः। एकोदंतमूलीयोरेफः। जिह्वामूलीयाःपंच । कुंखुंगुंघुंङुंइति । क्मख्मग्मघ्मकुंखुंगुंघुंइतियमाश्चत्वारः ॥ रुक्मतिप्रथमोज्ञेयः सक्था इत्यपरोभवेत् २३ । २९ तृतीयः विघ्नइत्याहुः १२ । १९ उपध्मेतिचतुर्थकः ॥ ११ ॥

वर्गोंका पहला दूसरा अक्षर श ष स ह यह अघोष हैं, इससे शेष घोष हैं वर्ण दशस्थान भेदवाले हैं. हृदय, कण्ठ, मूर्धा, तालु, दन्त, ओष्ठ, दन्तमूली, जिह्वामूली, यम अनुनासिक. दो उरस्थानी हैं. हह ह्व. तीन कंठस्थानी, अवर्ण, ह और विसर्ग, छः मूर्धन्य हैं, ट ठ ड ढ ण ष. दश तालुस्थानी हैं च छ ज झ ञ य श इ ई ई ३. आठ दन्तस्थानी हैं त थ द ध न ऌ ल़ य, आठ ओष्ठस्थानी हैं प फ ब भ म व उ उपध्मानीय एक रेफ दन्तमूलीय है पांच जिह्वामूली हैं ऋ कवर्ग कुं खुं गुं घुं ङुं इति. चार यम हैं क्म, ख्म, ग्म, घ्म, वा कुं खुं गुं घुं यह, रुक्म यह प्रथमका, सक्थ २३।२९ दूसरा, विघ्न १२।१९ तीसरा उपध्मेति वा जम्भेदध्मेति १६।६४ चौथा ॥ ११ ॥

प्रथमौचौष्ठनासिक्यौ द्वितीयः कंठचदंत्यश्चनासामूलमुपाश्रितः ॥ तृतीयःकंठ्यजिह्वाग्रेनासायासेवनिर्दिशेत् ॥ चतुर्थोह्रदिनासिक्यः कंठेचाभिहितायमाः ॥ १२ ॥

१ जम्भेदध्मेति चतुर्थकामिति वा पाठः ।

पहला ओष्ठ और नासिकास्थानी, दूसरा कण्ठ और दन्तस्थानी, नासामूलमें स्थित तीसरा कण्ठ और जिह्वाके अग्रभागमें नासिकामें निर्देश किया है, चौथा हृदय और नासिकास्थानी और कण्ठस्थानी यम कहा है ॥ १२ ॥

आपंचमैश्चैकपादःसंयुक्तंपंचमाक्षरम् ॥
उत्पद्यतेयमस्तत्रसोङ्गपूर्वाक्षरस्यहि ॥ १३ ॥

पञ्चम वर्णतक एक पदमें वा पांचवें अक्षरके आगे संयोगमें यम प्रगट होता है, वह पूर्व अक्षरका अङ्ग है ॥ १३ ॥

पंचमाःशषसैर्युक्ताअन्तस्थैर्वापिसंयुताः ॥
यमास्तत्रनिवर्ततेश्मशानादिवबांधवाः ॥ १४ ॥

पांचवाँ अक्षर स श ष से युक्त हो वा अन्तस्थ वर्णसे संयुक्त हो तो वहाँ यम निवृत्त होजाते हैं. जैसे श्मशानसे बन्धुजन ॥ १४ ॥

ऋवर्णेतिपरेसादावनुस्वारोद्विमात्रकः ॥
संयोगेपरभूतेषुह्रस्वएवोच्यतेबुधैः ॥ १५ ॥

ऋवर्णसे परे सकारकी आदिमें अनुस्वार द्विमात्रिक होता है. और संयोगमें परभूत होनेसे पंडितोंद्वारा ह्रस्व कहाजाता है ॥ १५ ॥

आद्यामात्रातुकण्ठ्यस्य एकारौकारयोर्भवेत् ॥
तालव्यस्यतथोष्ठ्यस्यद्वितीयाचयथाक्रमम् ॥ १६ ॥

एकार ओकारकी पहली मात्रा कण्ठस्थानी जानो, दूसरी तालु ओष्ठस्थानी यथाक्रमसे जानो ॥ १६ ॥

यादृशीरत्नवर्णाभाजपायाःकुसुमेथवा ॥
तादृशंरञ्जयेद्वर्णंप्रान्तेनासिक्यमाचरेत् ॥ १७ ॥

जिसप्रकार रत्नोंकी कान्ति वा जपाके फूलोंकी कान्ति होती हैं, इसप्रकार वर्णोंको रञ्जित कर प्रान्तभागमें अनुनासिक उच्चारण करै ॥ १७ ॥

लाक्षारक्तंयथातोयंनकारान्तंपदंतथा ॥
सर्वरंगंविजानीयाच्छत्रूनितिनिदर्शनम् ॥ १८ ॥

जैसे लाखके रंगका जल होता है इसी प्रकार नकारान्त पद रञ्जित हैं, इन सबको रंग जानें यथा 'शत्रूनिति' ७।३७ यह उदाहरण है ॥ १८ ॥

लुप्तेनकारेयत्स्वारंरञ्जन्तिशौनकादयः ॥

आदिरङ्गंविजानीयान्नचासीदिवविन्दति ॥ १९ ॥

नकारके लुप्त होनेमें जो शौनकादि स्वरको रञ्जित करते हैं, उसको आदि रंग जानै उसे स्थितिकी समान नहीं जाना जाता ॥ १९ ॥

प्रथमस्थषकारेणतकारेणचसंयुतम् ॥
एतदक्षरमासाद्यत्रिष्टुभेतिनिदर्शनम् ॥ २० ॥

पहले षकार तकारसे संयुक्त यह स्वर 'त्रिष्टुभेति' २८ । ४० इस प्रकारका होता है ॥ २० ॥

प्रथमस्थषकारेणथकारेणचसंयुतम् ॥
एतत्स्वरंसमासाद्याधिष्ठानमितिनिदर्शनम् ॥ २१ ॥

पहले षकार थकारसे संयुक्त होनेसे 'अधिष्ठान' यह उदाहरण १७ । १८ होता है ॥ २१ ॥

चतुर्थंचतृतीयेन द्वितीयंप्रथमेनच ॥
आद्यंमध्यन्तथान्यञ्चस्वरूपेणाभिपीडयेत् ॥ २२ ॥

चौथे वर्णको तसिरेसे, दूसरेको पहलेसे इस प्रकार आदि मध्य और अन्त्य पञ्चम अक्षरको स्वरूपसे पीडित करै ॥ २२ ॥

अवग्रहपदच्छेद उदात्तंदृश्यतेयदि ॥
स्वरन्तंस्वरितंप्राहुःसन्धौतुस्वार्य्यतेपरम् ॥ २३ ॥

अवग्रह और पदच्छेदमें यदि उदात्त दिखाई दे उस स्वरको स्वरित कहेंगे और सन्धिमें वह परवर्णसे स्वार संज्ञावाला होता है ॥ २३ ॥

स्वरसन्धिविधानेननीचोच्चंतुविधीयते ॥
व्यञ्जनाद्वास्वराद्वापितत्सन्धौस्वरउच्यते ॥ २४ ॥

स्वरसन्धिके विधानसे अनुदात्त उदात्त होजाता है व्यञ्जनसे वा स्वरसे उस सन्धिमें स्वर कहाजाता है ॥ २४ ॥

उदात्तान्निहितःस्वारःस्वरितात्प्रचयोभवेत् ॥
उदात्तात्स्वरितात्पूर्वोनान्यआपद्यतेस्वरः ॥ २५ ॥

उदात्तसे निहित हुआ स्वार, स्वरितसे प्रचय होता है, उदात्त और स्वरितसे पूर्व अन्य स्वर नहीं होता ॥ २५ ॥

पदकालेयःस्वरितःसंहितायांतथैवच ॥
स्वरिताच्चेद्भवेत्पश्चात्सएवनिचितःस्वरः ॥ २६ ॥

जो पद कालमें स्वरित है, संहितामें भी स्वरित है, स्वरितसे पीछे होनेवालाही निचित्त स्वर है ॥ २६ ॥

प्रथमाश्चतृतीयाःस्युःपरेघोषवतिस्थिते ॥
पञ्चमाःपंचमेपाठेद्वितीयाःशषसेषुच ॥ २७ ॥

आगे घोषवान् वर्णोंको स्थित होनेमें पहलोंको तीसरे होजाते हैं, पाठमें पांचके वर्णको पांचवां और शषस परे होनेसे दूसरे वर्ण होते हैं ॥ २७ ॥

उदात्तान्निहितःस्वार्य्यःस्वारोदात्तौनतत्परौ ॥
स्वरितोयस्तथाभूतोज्ञेयःसप्रचयःसदा ॥ २८ ॥

उदात्तसे निहित स्वार होता है, उससे परे स्वारोदात्त नहीं होते, जो इस प्रकारका स्वरित है उसको प्रचय जानना चाहिये ॥ २८ ॥

उच्चानुदात्तयोर्योगेस्वरितःस्वारउच्यते ॥
ऐक्यंतत्प्रचयःप्रोक्तःसन्धिरेषांमिथोद्भुतः ॥ २९ ॥

उदात्त अनुदात्तके योगमें स्वरितही स्वार कहाता है, इनकी एकता होनेसे प्रचय होता है, इनकी सन्धि संयोग अद्भुत है ॥ २९ ॥

बह्वीजिह्वायथागृह्णात्यह्नोवह्निस्तथैवच ॥
ब्रह्मरूपंविजानीयाद्गुरुमेवात्मनःसदा ॥ ३० ॥

वह्नीः जिह्वा जैसे ग्रहण किया जाता है इसी प्रकार अह्नः वह्निः उच्चरित होता है, शास्त्र पढकर अपने गुरुको सदा ब्रह्मरूप जाने ॥ ३० ॥

यत्किञ्चिद्वाङ्मयंलोकेसर्वमत्रप्रतिष्ठितम् ॥
करोतितत्प्रदानंयत्तस्माद्ब्रह्ममयोगुरुः ॥ ३१ ॥

जो कुछ लोकमें वाणी ( शास्त्र ) है: वह सब इसमें प्रतिष्ठित है उसके दान करनेसेही गुरु ब्रह्ममय कहाता है ॥ ३१ ॥

विधिनाप्यविधिनाज्ञानमविधानान्नलभ्यते ॥
अविधानपरोनित्यंप्रायश्चित्तीभवेन्नरः ॥ ३२ ॥

ज्ञान विधिसे ही प्राप्त होता है, अविधिसे नहीं, असावधानी करनेसे मनुष्य प्रायश्चित्ती होता है ॥ ३२ ॥

युक्तियुक्तंवचोग्राह्यंनग्राह्यंगुरुगौरवात् ॥
सर्वशास्त्ररहस्यंतद्याज्ञवल्क्येनभाषितम् ॥ ३३ ॥
इति श्रीयोगिप्रवरयाज्ञवल्क्यप्रोक्ताशिक्षासमाप्ता ॥

युक्तियुक्त वचनकोही ग्रहण करना चाहिये, केवल गुरुके गौरवसेही ग्रहण करना यह नहीं, यह सब शास्त्रका रहस्य याज्ञवल्क्यने वर्णन किया है ॥ ३३ ॥

इति श्रीमहर्षियोगिवरयाज्ञवल्क्यप्रोक्ता, पण्डितज्वालाप्रसादमिश्रकृत-
भाषाटीकासहिता शिक्षा समाप्ता.

---

शुभमस्तु

ज्येष्ठ० शु० ९ सं० १९५२



# अथानुवाकसूत्राध्यायः ।

श्रीगणेशायनमः ॥ॐअथानुवाकान्वक्ष्यामिब्रह्मणानिर्मितान्पुरा॥ शिष्याणामुपदेशाययज्ञसंस्कारएवच॥ विप्राणांयज्ञकालेषुजपहोमार्चनादिषु॥ १ ॥ इषेत्वैकावसोःपवित्रंतिस्रोग्नेव्रतपतेसप्तपवित्रेस्थोद्वेशर्मासितिस्रोधूर्ष्टिरसिशर्मासिद्विकौदेवस्यत्वातिस्रोदेवस्यत्वापंचप्रत्युष्टꣳरक्षस्तिस्रोदशैकत्रिꣳशत् ॥ १० ॥ ३१ ॥१॥ कृष्णोसिषडग्नेवाजजित्तिस्रोमयीदमग्नीषोमयोः पंचकावग्नेदब्धायोचतस्रःसंवर्चसापंचाग्नयेकव्यवाहनायषट्सप्तचतुस्त्रिꣳशत् ॥ ७ ॥ ३४ ॥ २ ॥ समिधाग्निंभूर्भुवःस्वश्चतुष्कावग्निर्ज्योतिर्द्वेउपप्रयंतःषड्विꣳशतिर्भूर्भुवःस्वश्चतस्रोगृहामातिस्रःप्रघासिनःपंचपूर्णादर्विद्वे अक्षन्नमीमदन्तषडेषतेसप्तदशत्रिषष्टिः॥ १०॥६३॥३॥ एदंद्वेमहीनांपयश्चतस्रआकूत्याऋक्सामयोर्द्विकौव्रतंकृणुतषडेषातेचतस्रोवस्व्यसितिस्रएषतेद्वेशुक्रंत्वाचतस्रोदित्यास्त्वगष्टौदशसप्तत्रिꣳशत्॥ १० ॥३७॥४॥अग्नेस्तनूरापतयेचतुष्कौतप्तायनीद्वेइन्द्रघोषस्तिस्रोयुञ्जतेष्टौदेवस्यत्वाचतस्रोदेवस्यत्वापंचविभूरसिचतस्रोज्योतिरसिषड्उरुविष्णोतिस्रोदशत्रिचत्वारिꣳशत्॥ १०॥४३॥५॥ देवस्यत्वाषडुपावीरसिपंचमाहिःषट्संते ( तिसंते ) तिस्रःसमुद्रंगच्छद्दविष्मतीद्विकौहृदेत्वापंचदेवस्यत्वाग्रावष्टौसप्तत्रिꣳशत्॥८॥३७॥६॥ वाचस्पतयऽउपयामगृहीतोसित्रिकावावायोयंवाद्विकौयावामेकातंप्रत्नथाचतस्रोयंवेनोयेदेवासस्त्रिकाविन्द्रायमूर्द्धानंद्विकौयस्तएकाप्राणायतिस्रोमघवइन्द्राग्नीआगतमघौमासश्चर्षणीधृतोविश्वेदेवासः आयतेंद्रमरुत्वोमरुत्वंतंवृषभंमरुतां त्वौजसेसजोपाइंद्रमरुत्वाँ२॥इन्द्रमहाँ२॥इन्द्रोमहाँ२ ॥इंद्रमेकैकोद्धुत्यमष्टौपंचविꣳशतिरष्टाचत्वारिꣳशत ॥२५ ॥४८ ॥ ७ ॥ उपयामगृहीतोसि ॥ आदित्येभ्यःपंच

वाममद्यद्वेसुशर्मास्येकाबृहस्पतिसुतस्यद्वेहारिरसिचतस्त्रः समिन्द्र
णोष्टौमाहिरेजतुदशमास्यःपंचकावातिष्ठ्युक्ष्वाहींद्रमिदेकैकायस्मा
न्नद्वेऽग्नेपवस्वोत्तिष्ठन्नेहश्रसुदुत्यमेकैकाजिघ्नद्वेविनइन्द्रवाचस्पतिंवि
श्वकर्मन्नेकैकाग्नयेत्वाचतस्त्रइहरतिस्तिस्त्रःपरमेष्ठीदशत्रयोविर्ठ्ंशति
स्त्रिषष्टिः ॥ २३ ॥ ६३ ॥ ८ ॥ देवसवितश्चतस्त्रइंद्रस्यवज्रः
पंचदेत्रस्याहंदशापयेतिस्त्रोवाजस्येममष्टावग्निरेकाशरेणैपतेचतुष्कौ
सविताद्वेअष्टौचत्वारिर्ठ्ंशत् ॥ ८ ॥ ४० ॥ ९ ॥ अपोदेवाश्च
तस्त्रःसोमस्यत्विषिःपंचावेष्ठ्राः सप्तसोमस्यत्वाचतस्त्रइन्द्रस्यवज्रः
पंचस्योनासिचतस्त्रः सवित्रेकाश्विभ्यांचतस्त्रोष्टौचतुस्त्रिर्ठ्ंशत् ॥
८ ॥ ३४ ॥ १० ॥ युञ्जानएकादशप्रतूर्त्तर्ठ्ंषोडशदेवस्यत्वाद
शापोदेवीद्वांदशापोह्येकादशादितिष्ट्वापंचाकूतिमष्टादशसप्तत्र्यशी-
तिः ॥ ७ ॥ ॥ ८३ ॥ ११ ॥ दृशानःसप्तदशादिवस्परिद्वा
दशसमिधाग्निंपंचदशापेतसप्तदशाऽसुन्वन्तंत्रयोदशयाओषधीः स
प्तविर्ठ्ंशतिर्मामाषोडशसप्तसप्तदशंर्ठ्ंशतम् ॥ ७ ॥ ११७ ॥१२॥
मयिगृह्णातिपंचदशध्रुवासिमधुवाताएकादशकौ सम्यक्स्त्रवंतिन्वे
मंमाषडपांत्वेकाऽयंपुरःपंचसप्ताष्टापंचाशत् ॥ ७ ॥ ५८ ॥ १३ ॥
ध्रुवक्षितिः षट्सजूरृतुभिर्मूर्द्धावयोद्विकाविन्द्राग्नीआयुर्मेषट्का
वाशुस्त्रिवृदेकाऽग्नेर्भागोस्येकयाचतुष्कावष्टावेकत्रिर्ठ्ंशत् ॥ ८ ॥
॥ ३१ ॥ १४ ॥ अग्नेजातान्पंचरश्मिनासत्यायचतस्त्रोराड्यस्य
यंपुरःपंचकावग्निर्मूर्द्धैकोनत्रिर्ठ्ंशत् येनऋषयोष्टौतपश्चनवसप्तपं-
चषष्टिः ॥ ७ ॥ ६५ ॥ १५ ॥ नमस्तेषोडशहिरण्यबाहवऽ
उष्णीषिणेतक्षभ्योज्येष्ठायपंचका स्तुत्यायचतस्त्रःशंभवायैकापार्या-
यपंचद्रापेअंधसोवि ंशतिर्नवषट्षष्टिः ॥ ९ ॥ ६६ ॥ १६ ॥
अश्मन्नूर्जंदशनमस्तेपंचाग्निस्तिग्मेननवचक्षुषःपिताष्टावाशुः शि
शानःसप्तदशोदेनंकमध्वमग्निनापंचदशकौशुक्रज्योतिःसप्तेमर्ठ्ंस्त

नंत्रयोदशनवैकोनशतम् ॥ ९ ॥९९॥१७॥वाजःसप्तमूक्ष्चंचतुष्का
अश्माग्निस्त्रिकावर्ठ्ंशुः पंचैकाचतस्रोवाजायद्वेवाजस्यत्वष्टावृता
षाद्त्रयोदशाग्नियुनज्मिसप्तयदाकूताद्वात्रिंहत्यायदशकौत्रयोदशस
प्तसप्ततिः ॥ १३ ॥ ७७ ॥ १८ ॥ स्वाद्वींत्वैकादशदेवायज्ञंविर्ठं
शतिःसुरावंतर्ठंसप्तदशोदीरतांत्रयोदशाच्याजानुदेशसोमोराजाष्टौ
सीसेनतंत्रर्ठं षोडशसप्तपंचनवतिः ॥७॥९५॥ १९ ॥ क्षत्रस्ययो
निस्त्रयोदशयद्देवादशाभ्यादधाम्यष्टौ याभूतानांचतस्रःसमिद्धइंद्र
एकादशायात्वष्टौसमिद्धोअग्निर्द्वादशाश्विनाहविस्त्रयोदशाश्विना
तेजसैकादशनवनवतिः ॥९।९०॥ २०॥ इमम्मेसमिद्धोअग्निरेकाद
शकौवसन्तेनऋतुनाषड्होतायक्षत्समिधाग्निर्द्वादशाऽश्विनौछाग
स्यसप्तदेवंबर्हिश्चतुर्दश षडेकषष्टिः ॥ ६ ॥६१॥ २१ ॥ तेजो
सिपंचाग्नयएकाहिंकारायद्वेतत्सवितुर्द्दशविभूर्मात्रैकाकायद्वेआब्रह्मं
स्त्रयोदशशेषादेकैकोनविर्ठंशतिश्चतुस्त्रिर्ठंशत् ॥ १९॥३४ ॥२२॥
हिरण्यगर्भोयः प्राणतोद्विकौयुंजंत्यष्टौवायुष्ट्वापंचप्राणायतिस्रउत्स
क्थाद्वादशगायत्रीकस्त्वाषट्कौकःस्विदष्टौकास्विद्दशसुभूःस्वयम्भू
स्तिस्रएकादशपंचषष्टिः॥११॥६५॥२३ ॥ अश्वस्तूपरोधूम्रान्वसं
ताय समुद्राय शिशुमारान्मयुःप्राजापत्योदशकाश्चत्वारश्चत्वारिर्ठं
शत्॥४॥४०॥२४॥शादंदद्भिर्नवैकंकाहिरण्यगर्भश्चतस्रआनोदश-
मानोमित्रोयदश्वस्याष्टकौ यत्तेषडिमानुकंद्वेपंचदशसप्तचत्वारिर्ठं
शत्॥१५॥४७॥२५॥अग्निश्चपंचदशोच्चातएकादशद्वौषड्विर्ठंशतिः
॥२॥२६॥२६॥समास्त्वादशोद्ध्वाअस्यपीवोअन्ना द्वादशकावभि-
त्वैकादशचत्वारःपंचचत्वारिर्ठंशत्॥४॥४५॥२७॥होतायक्षदेका-
दश देवंबर्हिर्द्वादशपुनरप्येवंचत्वारःषट्चत्वारिर्ठंशत् ॥ ४ ॥४६॥
॥२८॥समिद्धोअंजन्नेकादशयदक्रंदस्त्रयोदशसमिद्धोअद्यद्वादशकेतुं
कृण्वंश्चतुर्विर्ठंशतिश्चत्वारःषष्टिः ॥ ४ ॥६०॥ २९ ॥ देवसवितः

षट्तपसेकौलर्ठ्षोडशद्वौद्वाविर्ठ्शतिः ॥२॥२२॥३०॥ सहस्रशी-र्षाषोडशाद्भ्यःसंभृतःषट्द्वौद्वाविर्ठ्शतिः ॥ २ ॥ २२ ॥ ३१ ॥ तदेवसप्तवेनस्तन्नवद्वौषोडश ॥ २ ॥ १६ ॥ ३२ ॥ अस्याजरासः सप्तदशापश्चिद्वादश विभ्राट्चतुर्दशप्रवावृजएकादशप्रवायुग्रवीरया-पंचदशकावानस्त्रयोदशसप्तसप्तनवतिः ॥ ७॥९७॥ ३३ ॥ यज्जा-ग्रतःपंचनद्यःसोमोधेनुमाकृष्णेनपूपंतवदशकानतदष्टौपडष्टापंचा-शत् ॥ ६ ॥ ५८ ॥ ३४ ॥ अपेतोदशाद्यंद्वादशद्वौद्वाविर्ठ्शतिः ॥ २ ॥ २२॥ ३५ ॥ ऋचंवाचर्ठ्षोडशद्यौःशांतिरष्टौद्वौचतुर्विर्ठ्-शतिः ॥ २ ॥ २४॥ ३६ ॥ देवस्यत्वादशयमायत्वैकादशद्वावेक-विर्ठ्शतिः॥२॥२१ ॥३७॥देवस्यत्वाष्टौयमायत्वाक्षत्रस्यत्वादश-कौत्रयोष्टाविर्ठ्शतिः ॥३॥२८॥३८॥ स्वाहाप्राणेभ्यःपङ्क्षुग्रश्चसप्त-द्वौत्रयोदश॥२॥१३॥३९॥ईशावास्यमष्टावंधंतमोनवद्वौसप्तदश ॥ ॥ २ ॥१७॥४०॥दशाध्यायेसमाख्याताअनुवाकास्तुसंख्यया ॥ शतंदशानुवाकाश्चनवान्येचमनीषिभिः ॥ १ ॥ सप्तषष्टिश्चितौज्ञे-यासौत्रेद्वाविंशतिस्तथा ॥ अश्वएकोनपंचाशत्पंचत्रिंशत्खिले-स्मृताः ॥२॥ शुक्रियेषुतुविज्ञेयाएकादशमनीषिभिः ॥ एकीकृत्य-समाख्यातंत्रिशतंत्र्यधिकंमतम् ॥ ३ ॥

( आदिकें दशअध्यायमें ११९ अग्निचयनके आठकाध्यायोंमें २७ सौत्रके ३ अ० में २२ अश्वमेधके चार अ० में ४९ खिलके दश अ० में ३५ शुक्रके पांच अ० ११ सब मिलाकर ३०३ अनुवाकहैं । )

इत्यनुवाकसूत्राध्यायः समाप्तः ।

---

## अथ सर्वानुक्रमणी ।

श्रीगणेशायनमः॥ मंडलंदक्षिणमक्षिहृदयंचाधिष्ठितंयेनशुक्ला-नियजूंष्यृषिर्भगवान्याज्ञवल्क्योयतः प्रापतंविवस्वंतंत्रयीमयम-

र्चिष्मंतमभिध्यायमाध्यंदिनीयेवाजसनेयकेयजुर्वेदाम्नायेसर्वेसखि-
लेसशुक्रियऋषिदैवतच्छंदाᳬस्यनुक्रमिष्यामोयजुषामनियताक्ष-
रत्वादेकेषांछन्दोनविद्यतेद्रष्टारऋषयःस्मर्तारः परमेष्ठ्यादयोदेव-
तामन्त्रांतर्भूताग्न्यादिकाहविर्भाजःस्तुतिभाजोवानःशाखोखाश-
म्योपवेशकपालेध्मोलूखलादयश्चप्रतिमाभूताश्छंदाᳬसिगाय-
त्र्यादीन्येतान्यविदित्वयोधीतेनुब्रूतेजपतिजुहोतियजतेयाजयते त-
स्यब्रह्मनिर्वीर्यंयातयामंभवत्यथांतराश्वगर्त्तंवापद्यतेस्थाणुंवर्छेतिप्र
मीयतेवापापीयान्भवत्यथविज्ञायैतानियोधीतेतस्यवीर्यवदथ योर्थं
वित्तस्यवीर्यवत्तरंभवतिजपित्वाहुत्वेष्ट्वातत्फलेनयुज्यते ॥ १ ॥ इषे
त्वादिखंब्रह्मांतंविवस्वानपश्यत्ततःप्रतिकर्मविभागेनब्राह्मणानुसा-
रेणऋषयोवेदितव्याःपरमेष्ठीप्राजापत्योदर्शपूर्णमासमंत्राणामृषि
र्देवावाप्राजापत्याइषेत्वाशाखानुष्टुब्विनियोगःकल्पकारोक्तएवमू-
र्जेत्वावायवोवायव्यंदेवोवऐंद्रंयजमानस्यशाखावसोर्वायव्यंद्यौर्मा-
तरिश्वनउखावसोर्वायव्यंदेवस्त्वापयःकामधुक्षःप्रश्नःसाविश्वायुस्त्री-
णिगव्यानींद्रस्यैन्द्रंविष्णोपयः ॥ २ ॥ योअग्र इदमाग्नेये ॥ क-
स्त्वाप्राजापत्यंकर्मणेस्रुक्शूर्पंप्रत्युष्टंद्रराक्षसेउरुब्रह्मरक्षोघ्नᳬसर्वत्रधू
रसिधूर्देवानांविष्णुस्त्वानऽउरुहविष्याऽअपहतᳬरक्षोयच्छंताᳬह
विष्यादेवस्यत्वासावित्रᳬसर्वत्राग्नयेलिंगोक्तेभूतायत्वाहविःस्वःसू
र्योद्दᳬहंतांगृहाःपृथिव्यास्त्वाहव्यंपवित्रेलिंगोक्तᳬसवितुर्देवीः प्रो-
क्षिताआपान्यग्नयेलिंगोक्तेदैव्यायपात्राणि ॥ ३ ॥शर्मास्यदित्याः
कृष्णाजिनमवधूतᳬराक्षसमद्रिर्ग्रावोलूखलेअग्नेर्हविर्बृहत्सइसम्मौ-
सलेहविष्कृदधिदैवतंवागधियज्ञंपत्नीकुक्कुटोवाग्वर्षवृद्धᳬशूर्पंप्रति-
त्वाहविःपरापूतमपहतᳬराक्षसेवायुर्वोदेवोवस्तंडुलाधृष्टिरूपवेषो-
पाग्नआदेवयजमाग्नेयेध्रुवमसिधिषणांकपालान्यग्नेब्रह्माग्नेयंधिषणा-
सिदार्षदंदिवःशम्याधिषणोपलंधान्यमसिधिषणाᳬहविर्महीनासा-

ज्यम् ॥ ४ ॥ संव्वपामिहविःसमापआपंजनयत्त्यैत्वेदर्ठ॑हविरिषे
त्वाज्यंधर्मोसिषण्णांपुरोडाशस्त्रितायत्रयाणांत्रितोद्वितएकतःक्रमे
णाददइंद्रस्यस्फ्यःपृथिविवेदिर्व्रजंपुरीषंवर्षंतुवेदिर्बधानसाविन्नम-
पाररुमररोआसुरेंद्रप्सस्तेवेदिर्गायत्रेणत्रीणिवैष्णवानिसूक्ष्मात्रया-
णांवेदिःपुराघशर्ठ॑सोपश्यच्चांद्रमसीत्रिष्टुभंप्रोक्षणीःप्रैपोद्विपतः
आभिचारिकमनिशितःस्रुवोनिशितास्रुगदित्यैविष्णोर्योक्रमूजैत्र
याणामाज्यर्ठ॑सवितुरापंतेजोसिधामाज्यम् ॥ ५ ॥

इति संहितायां प्रथमोध्यायः ॥ १ ॥

कृष्णोसीध्मोवेदिर्बर्हिर्लिंगोक्ते आदित्या आपंविष्णोःप्रास्तर-
मूर्णम्रदसंवेदिर्भुवपतयेत्रीण्याग्नेयानिगंधर्वस्त्रयाणांपरिधयोवीति-
होत्रंविश्वावसुराग्नेयींगायत्रीर्ठ॑समिदाग्नेयर्ठ॑सूर्यस्त्वालिंगोक्तर्ठ॑स
वितुर्विधृतीऊर्णम्रदसमात्वाप्रास्तरेघृताच्यसित्रयाणांजुहूपभृद्ध्रुवाः
क्रमेणप्रियेणहविर्ध्रुवा असदन्पाहिमां वैष्णवेअग्नेवाजजिदाग्नेयं
नमोदैवछंस्वधापित्र्यᳲसूयमेस्रुचावंग्निणावैष्णवंवसुमतीमाग्नेयमि
तऐंद्रᳲसंज्योतिषाज्यंमयीदमाशीःप्रतिग्रहणमुपहूताद्यावापृथिव्य
म्॥ ६ ॥ ब्रह्मत्वंप्रतिष्ठांतम् ॥ बृहस्पतिरांगिरसोपश्यदग्नेह्वाप्राशि
त्रमेतंतेवैश्वदेवमेषातेत्रुष्टुबाग्नेय्यग्नेवाजजिदाग्नेयमग्नीषोमयोश्चत्वा-
रिर्लिंगोक्तानिवसुभ्यस्त्रयाणांपरिधयः संजानाथाम्यंतुप्रास्तरेमरुतां
कपिर्बृहत्तीप्रास्तरीमंत्यः पाद आग्नेयोयंपारिधिंदेवल आग्नेयींत्रिष्टुभं
विराड्रूपांयजुरंतामग्नेः प्रियंयजुःसर्ठ॑स्त्रभागासोमसूक्ष्मोवैश्वदेवींत्रि
ष्टुभंयजुरंताछंस्वाहावाच्यजुर्घृताचीस्रुचौयज्ञनमः शूर्पंयवमान्कृ-
पिरुद्दालवान्धानांतर्वानितिपंचार्षयोयज्ञो देवताग्नेदब्धायोगार्हप-
त्योग्नयेदक्षिणाग्निः सरस्वत्यैलिङ्गोक्तंवेदोसिवेदोदेवामनसस्पतिर्वा
तदेवत्यांविराज ᳲसंबर्हिर्लिंगोक्तात्रिष्टुब्विराड्रूपाकस्त्वाप्राजापत्य-

ठंरक्षसाठंराक्षसम् ॥ ७ ॥ अथयाजमानठंसंवर्च्चसात्वाष्ट्रीत्रिष्टु
ब्दिविविष्णुस्त्रीणिवैष्णवान्यस्माद्वागोस्त्यैभूमिरगन्मदैवठंसंज्यो
तिषाहवनीयःस्वयंभूःसूर्यस्यसौरेअग्नेगृहपतेगार्हपत्यःसूर्य्यस्यसौ-
रमग्नइदमाग्नये ॥ ८ ॥ पितृयज्ञःप्रजापतेरार्षमग्नयेसोमायद्वेदैवे
स्वाहाकारश्रुतेरपहता असुरंयेरूपाणिकव्यवाहनोग्निस्त्रिष्टुबत्रामी
मदंतपित्र्यैनमोवःषड्लिंगोक्तानिपरेपित्र्येआधत्तपित्र्यागायत्र्यूर्जं
मापिविराट् ॥ ९ ॥

इति संहितायां द्वितीयोध्यायः ॥ २ ॥

अग्न्याधेयंप्रजापतेरार्षम्॥देवानामग्नेर्गंधर्वाणांवासमिधाग्नेय्यश्वत
स्रोगायत्र्यःसमिधाविरूपआंगिरसः सुसमिद्धायवसुश्रुतस्तंत्वाभर
द्वाजोभूर्भुवःस्वस्तिस्रोमहाव्याहृतयोग्निवायुसूर्यदेवत्याः ॥ क्रमेण-
द्यौरिवयजमानाशीर्लिंगोक्तदेवतायंगौःसार्पराज्ञ्यस्तृचोगायत्र्योग्नि
परावररूपेणदेवता॥१०॥अग्निहोत्रंप्रजापतेरार्षमग्निर्ज्योतिः सप्त-
लिंगोक्तदेवतागायत्र्यआद्याःपंचैकपदाअग्निर्वर्चोद्वेतक्षापश्यत्परा-
जीवलश्चैलकिः॥११॥यजमानाग्न्युपस्थानंबृहद्देवानामार्षम्॥ उप
प्रयंतइत्यनुवाकआद्येद्वेआग्नेय्यौगायत्र्यावुपपत्यागोतमाराहूगणो
मूर्द्धन्वत्याविरूपउभावांभरद्वाजऐंद्राग्नीत्रिष्टुभंयंतेदेवश्रवादेववात-
श्च भारतावाग्नेयीमनुष्टुभमयमिहवामदेवोजगतीमस्यप्रत्नामवत्सा-
रोगव्यांवाग्नेयींवापयोदेवत्यांवागायत्रींतनूपाआग्नेयानींधानाआग्ने
यींमहापंक्तिरुयवसाना ॥ १२ ॥ चित्रावसोरात्रिदेवत्यमृषयोपश्य
न्त्संत्वमाग्नेयमंधस्थरेवतीःसठंहितेतित्रीणिगव्यान्युपत्वाग्नेयंतृचं
गायत्रं मधुच्छंदावैश्वामित्रोग्नेत्वंचतस्रोद्विपदाआग्नेयीर्बंधुः सुबंधुः
श्रुतबंधुर्विप्रबंधुरेकैकशइडेकाम्यागव्येसोमानंब्रह्मणस्पत्यंतृचंगा-
यत्रंब्रह्मणस्पतिर्मेधातिथिर्वामहित्रीणाठंसत्यधृतिर्वारुणिरादित्य-
दैवतंतृचंगायत्रंपथिस्वस्त्ययनंकदाचनैंद्रींपथ्याबृहतींमधुच्छंदा-

स्तत्सवितुर्विश्वामित्रः सावित्रींगायत्रींपरितेवामदेवश्चाग्नेयीमनिरु क्तांगायत्रीम् ॥ १३ ॥ क्षुल्लकोपस्थानमासुरेरार्षम् ॥ भूर्भुवः स्वःप्रवत्स्यदुपस्थानमागतोपस्थानंचादित्यस्यार्षंनर्यगार्हपत्यः शर्ठस्याहवनीयोथर्वदक्षिणाग्निरागन्माहवनीयोनुष्टुबयमग्निन्र्यंकु सारिणीबृहतीगार्हपत्योयमग्निरन्वाहार्यपचनोनुष्टुब्गृहामात्रिष्टु ब्विराड्रूपायेग्मषानुष्टुब्वुपहूतामहापंक्तिरुयवसानास्तिस्नोपिवास्त- वीःशंयुर्बार्हस्पत्यः ॥१४॥ चातुर्मास्यानिप्रजापतेरार्षम् ॥ प्रघा- सिनोमारुतीगायत्रीयद्गाममारुत्यनुष्टुब्वनिरुक्तामोपूणोगस्त्यऐंद्रा मारुतींविराजमक्रन्ननिरुक्ताग्नेय्यनुष्टुबवभृथयज्ञदैवतंपूर्णादर्विंद्रे और्णवाभऐंद्र्चावनुष्टुभावक्षंद्वेगोतमऐंद्र्चौपंक्तीमनोनुमानसंतृचं बंधुर्गायत्रंवयर्ठसौमींगायत्रींबंधुरेषतेद्वेरौद्रेअवरुद्रर्ठरौद्र्चावेकापं- क्तिरपराककुप्त्र्यंबकंद्वेअनुष्टुभौपूर्वस्यांवसिष्ठएतदास्तारपंक्तिन्र्या- युषंनारायणउष्णिहंयजमानाशीर्षर्ठशिवोनामक्षौरंनिवर्तयामिलिं गोक्तदैवतमाशीःप्रायम् ॥ १५ ॥

इति संहितायां तृतीयोऽध्यायः ॥ ३ ॥

अग्निष्टोमःप्रजापतेरार्षम्॥ एदंद्वेअत्यष्टीत्यवसाने आद्यावर्द्धर्चौ देवयजनदेवत्याविमाआपओषधेकुशतरुण ऽ स्वधितेक्षौरमापोऽ अस्मानापंदीक्षातपसोर्वासोमहीनां नवनीतंवृत्रस्यांजनंचित्पतिर्द्वे प्राजापत्येदेवोमासावित्रमावोदेव्यनुष्टुबासीस्वाहायज्ञंच तुर्णांयज्ञ- आकूत्यैचतुर्णांमौद्ग्रभणानामग्निरापोदेवीलिंगोक्तदेवताविराट् १६ विश्वोदेवस्यस्वस्त्यात्रेयः ॥ सावित्रीमनुष्टुभमृक्सामयोःकृष्णा जिनेशर्मासिकृष्णाजिनमूर्गस्यांगिरोभिर्हष्टंमेखलर्ठसोमस्यनीवि- र्विष्णोर्वासइंद्रस्ययुसस्याःकृष्णविषाणोच्छ्रयस्वदंडोव्रतंयज्ञोदेवीं धीर्थेदेवावाक्प्राणोदानौचक्षुःश्रोत्रमध्यात्ममग्निर्मित्रावरुणावादि त्योविश्वेदेवाअधिदैवतर्ठम्वात्राअपोजगतीयंतेलोष्टमपोमूत्रंपृथि

व्यालोष्टमग्नेत्वमाग्नेय्यनुष्टुप्पुनर्मनआग्नेयंत्वमग्नेवत्सआग्नेयींगाय त्रींॐरास्वेयत्सौम्यमेषातेहिरण्याज्यदैवतंजूरसिवाग्दैवतॐशुक्रम सिहिरण्यंचिदसिगौःसोमक्रयणीवाग्रूपाध्यारोपकल्पनया ॥ १७ ॥ वस्व्यंस्यनुष्टुब्बृहतीवासोमक्रयण्यास्तुतिरदित्याआज्यमस्मेषण्णां लिंगोक्तादेवताःसमख्येपत्न्याशीरास्तारपंक्तिरेषतेलिंगोक्तदेवतमा स्माकोसिसौम्यमभित्यॐसावित्र्यष्टिःप्रजाभ्यस्त्वाप्रजास्त्वाशुक्रं त्वासौम्यानिसग्मेस्मेलिंगोक्तेतपसोर्द्धजार्द्धसोमोमित्रोनइंद्रस्यसौ म्येस्वानादीनिधिष्ण्यनामानिपरिमाग्नेयीपुरस्ताद्बृहतीप्रतिपंथाम नुष्टुप्पथिदेवत्यादित्याःकृष्णाजिनमदित्यैसौम्यमस्तभ्नात्रिष्टुभौ वारुण्यौसूर्यस्यानुष्टुप्कृष्णाजिनमुस्रावूर्ध्वबृहत्यानड्डुहीभद्रोमेसौ म्यंनमोमित्रस्याभितपनःसूर्यः सौरींजगतींवरुणस्यपंचवारुणानि यातेसौमींत्रिष्टुभंगोतमः ॥ १८ ॥

इति संहितायां चतुर्थोऽध्यायः ॥ ४ ॥

अग्नेस्तनूरसिपंचवैष्णवान्यग्नेःशकलंवृषणादर्भतरुणेकेउर्व श्यसित्रयाणांलिंगोक्तादेवतागायत्रेणत्रीण्याग्नेयानिभवतंनःपंक्ती रग्नावग्निर्विराडेतयोर्निमंथ्याहवनीयावग्नीदेवतेआपतयेवायव्यम नाधृष्टमाज्यमग्नेव्रतपाआग्नेयमॐशूरॐशुःप्रकृतिश्चतुरवसाना सौम्यंत्योर्द्धचौलिंगोक्तदैवतोयातेत्रीण्याग्नेयानितप्तायनीचत्वारि पार्थिवानिविदेदाग्नेयमग्नेअंगिरोयोस्यामनुत्वालिंगोक्तानिसि ॐह्यसित्रयाणां वेदिरिंद्रघोषश्चतुर्णामुत्तरवेदिरिदमहमापॐसि ॐह्यसिपंचानांवाग्भूतेभ्यःस्रुग्ध्रुवोसिपरिधयस्त्रयाणामग्नेःसंभा रागुल्गुल्वादयः ॥१९॥ युंजतेश्यावाश्वः॥सावित्रींजगतीमिदंवि ष्णुर्मेधातिथिर्वैष्णवींगायत्रीमिरावतीवसिष्ठस्त्रिष्टुभंदेवश्रुतावक्षधु रौप्राचीस्वंगोष्टमत्रहविर्द्धानेविष्णोर्नुतिस्रोवैष्णव्यस्त्रिष्टुभआद्येद्वेय ज्ञुरंतेविष्णोर्नुप्रतद्दीर्घतमाऔतथ्यो विष्णोरराटंपंचवैष्णवान्याद

देश्रिरिदमहरठं रक्षोघ्नंबृहन्नौपर्वाणीदमहंपञ्चलिंगोक्तानिस्वराड-
स्यौपर्वाणिचत्वारिरक्षोहणोवःसप्तवैष्णवानियवोसियवोदिवेत्त्वौदुं
बरीशुन्धंतांपित्र्येउद्दिवंपंचानामौदुंबरीघृतेनद्यावापृथिव्यामिंद्रस्यै-
न्द्रंपरित्वामधुच्छंदाअनिरुक्तामैंद्रीमनुष्टुभमिंद्रस्यैंद्राणित्रीणिचतुर्थ-
वैश्वदेवम्॥२०॥विभूरस्यष्टानांधिष्ण्याअग्नयः ॥ सम्राडाहवनीयः
परिषद्योबहिष्पवमानदेशोनभोसिचात्वालोमृष्टोसिशामित्रऋत-
धामौदुंबरीसमुद्रोसिब्रह्मासनमजोसिशालाद्वार्योहिरसिप्राजहितो-
वागसिसदऋतस्यद्वार्येअध्वनाꣳसूर्योमित्रस्यर्त्विजोग्नयोधि-
ष्ण्याः ॥ २१ ॥ ज्योतिरसिवैश्वदेवम् ॥ त्व ठं सोमऋतुर्भार्गवः
सौमींगायत्रीमनवसानांजुषाणो अप्तुदेवत्यैकपदाविराडयजुरंता-
ग्नेनयागस्त्यआग्नेयींत्रिष्टुभंयमयज्ञत्रिष्टुब्यजुरंताग्नेय्युरुविष्णोवै-
ष्णव्यनुष्टुब्यजुरंतादेवसवितः सावित्रमेतत्त्व ठं सोम्यꣳस्वाहा-
निर्लिंगोक्तदेवतामग्नेव्रतपाआग्नेयमत्यन्यान्वनस्पतिरोषधेकुश-
तरुणꣳस्वधितेपरशुर्द्यामातस्त्वंवनस्पतिः ॥ २२ ॥

इति संहितायां पंचमोऽध्यायः ॥ ५ ॥

अग्रेणीः शकलम् ॥ देवस्त्वायूपःसुपिप्पलाभ्यश्वबालंद्यामग्रे-
णयूपोयातेदीर्घतमायूपदेवत्यात्रिष्टुभंब्रह्मवनिब्रह्मद ठं हयूपदेवत्ये
विष्णोःकर्माणिद्रेमेधातिथिर्वैष्णव्योगायत्र्यौपरिवीर्यूपोदिवस्त्वरुरे-
षतेयूपउपावीस्तृणमुपदेवांलिंगोक्तमृतस्यत्वापशुरग्नीषोमाभ्यां
लिंगोक्तमद्भ्योपांपशुरापोदेवीरापठं संतेपशुर्घृतेनस्वरुशासौरेवती
वागवषोतृणꣳस्वाहादैवे ॥ २३ ॥ माहिर्भूरज्जुर्नमस्तेयज्ञोदेवीरा-
पोर्द्धमापमर्द्धमाशीर्वाचंतेमनस्तेपशुःशंलिंगोक्तमोषधेतृणꣳस्व-
धितेसीरक्षसांलिंगोक्तंनिरस्तमिदमहठंरक्षोहणीघृतेनद्यावापृथिव्यं
वायोवायव्यमग्निराजस्याग्नेयꣳस्वाहाकृतेवपाश्रपण्याविदमाप
आपीमहापंक्तिरुयवसानापावमानश्चांत्यःपादः संतेहृदयठंरेडसि

वसाप्रयुतंलिंगोक्तंघृतं वैश्वदेवंदिशःपंचदिश्यान्यैंद्रःप्राणः पश्वंगः
प्राणदानंलिंगोक्तं देवत्वापूीत्रिष्टुप् ॥ २४ ॥ समुद्रंलिंगोक्तानि
द्वादश ॥ दिवंतेस्वरुमापोहृदयशूलंधाम्नोधाम्नोवारुणंयदाहुर्वा-
रुणीगायत्र्यनवसानासुमित्रियानआपठं हविष्मतीलिंगोक्तदेव-
तानुष्टुबग्नेर्वैश्वत्वार्यापाऽग्यमूरापींगायत्रींमेधातिथिर्हदेत्वासौम्य-
नुष्टुप् सोमराजन्त्सौम्येशृणोतुलिंगोक्तदेवतात्रिष्टुब्देवीरापऽआपी
पंक्तिःकार्षिराज्यमनुष्टुप्समुद्रस्यसमापआपेय्यमग्नेमधुच्छंदाआ-
ग्नेयींगायत्रीमाददेग्रावानिग्राभ्याआपमिंद्रायत्वापंचसौम्यनियत्ते
सौमीविपरीताबृहतीश्वात्राः पथ्याबृहतीमाभेःसौम्यमर्द्धंद्यावापृथि-
व्यमर्द्धंप्रागपाक्सौम्युष्णिक्त्वमंगगोतमऐंद्रींपथ्याबृहतीम् ॥२५॥

इति संहितायां षष्ठोऽध्यायः ॥ ६ ॥

वाचस्पतयेप्राणदेवत्याविराट् ॥ मधुमतीर्लिंगोक्तंयत्तेसौम्यं
स्वाहोरुयजुषीलिंगोक्तेस्वांकृतोस्युपांशुर्देवेभ्यस्त्वादैवंदेवांशो
लिंगोक्तमाभिचारिकं प्राणायाग्रहोव्यानायउपांशुसवनउप-
यामगृहीतोस्यंतरैंद्रमंतस्तेमघवदेवत्यात्रिष्टुबुदानायगृहआवायोव
सिष्ठोवायव्यांत्रिष्टुभामिंद्रवायूमधुच्छंदाऐंद्रवायवींगायत्रीमयंवांगृ-
त्समदो मैत्रावारुणींठंरायावयंत्रसदस्युस्त्रिष्टुभंयावांमेधातिथिरा-
श्विनींगायत्रींतंप्रत्नथावत्सारः काश्यपोवैश्वदेवींजगतीमच्छिन्नस्य
सौम्यठंसाप्रथमैंद्रीत्रिष्टुप्तृपंत्वयाऽग्नीलिंगोक्ते ॥ २६ ॥ अयंवे
नोवेनस्यत्रिष्टुप्सोमस्तुतिरधिदैवतमधियज्ञंचमनोनत्रिष्टुप्सोमस्तु-
तिरधियज्ञानुवादिन्यपमृष्टःशंडोपमृष्टोमर्कआभिचारिकेदेवा-
स्त्वाशुक्रामंथिनावनाधृष्टासिदक्षिणोत्तरेवेदिश्रोण्यौसुवीरःसुप्रजाः
शुक्रामंथिनौनिरस्तोद्रेआभिचारिकेशुक्रस्यमंथिनःशकलंयेदेवा
सःपरुच्छेपोवैश्वदेवींत्रिष्टुभमाग्रायणोसिलिंगोक्तदैवतम् ॥ २७ ॥
सोमःपवतेवैश्वदेवामिंद्रायत्वापंचलिंगोक्तानिमूर्द्धानंभरद्वाजोवै-

